यथाकालफलदानम् उदीरणा अपक्वपाचनम् आदिशब्देन द्रव्यान्तरसम्बन्धपरिग्रहः, तद्वशात् मिथ्यादर्शनादेः मिथ्यात्वाद्याद्येः [२७५ख] आदिशब्देन मिथ्याज्ञानपरिग्रहः, इतरस्य जीवपरिणामस्य दर्शनात् । एवं मन्यते–संसारिणो जीवस्य आगन्तुकसुखदुःखादीनां द्रव्यान्तरसम्बन्धोदीरणवशात् आगन्तुकत्वात् मिथ्यात्वसत्तादिवत् ।

५ तयो (तो) यदुक्तं परेण–*"विवादास्पदीभूत सुखदुःखादिकं संसारिणः प्रस्तं सचमन्या तद्गुणेन कृतम्, कार्यत्वे सति तदुपका[र]कत्वात् प्रासादिवत्" इति, तन्निरस्तम् । यदि परम्परया सिद्धसाधनम् । अथ साक्षात् यदि द्रव्यान्तरसम्बन्धात् जीवस्य साक्षात् दर्शनेऽपि अन्यदेवोत्पत्ने अनवस्था । भवतु तदेव संसारकारणमिति चेत्, तस्य तत्परिक्षयात् कर्मपरिक्षयात् मोक्ष इति । तथाहि [यत्] यन्निमित्तं तत् तदभावे न भवति यथा

१० बीजाभावे अङ्कुरः, कर्मनिमित्तश्च संसार इति ।

परः प्राह–

*"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव च ॥"

[महाभा० वनप० ३०।२८] इति

१५ ईश्वरः तन्निमित्तम् इति ।

*"कालः पचति भूतानि" [महाभा० आदिप० १।२७२ ७५] इत्यादि वचनात् कालः तन्निमित्तम् इति ।

*"पुरुष एव" [ऋक्० १ ।९ ।२] इत्याद्यभिधानात् पुरुषः कारणम् ।

*"प्रकृतेर्महान्" [सांख्यका० २२] इत्यादिवचनात् प्रकृतिः कारणम्, [न] कर्मेव इति,

२० तत्राह–

ईश्वरादिकं 'संसारनिमित्तम्' इत्यनुवर्तते । 'कल्पयताऽपि' इति पदेन क्षेपं प्रदर्शयति–कल्पयितुमपि न तत्र किञ्चित् प्रमाणम्, केवलं कल्पनामात्रमिति । तद्भावे कर्माभावे अतिप्रसङ्गात् । अतिप्रसङ्गं दर्शयन्नाह–तस्यापि इत्यादि । केवलम् अन्येषां मुक्तात्मनां संसारिणां चाविशेषेण तत् तन्निमित्तं स्यात् अपि तु तस्यापि ईश्वरस्यापि ईश्वरः

२५ संसारनिमित्तं [२७६क] स्यात् । कुत एतत् ? इत्यत्राह–जीवावि[शे]षात् । जीवे

(१) तुलना–"चैतन्यविशेषगुणप्रेरितभूतकार्याः तदुपकारकत्वात् शरीरादयः कार्यत्वे सति तदुपभोगसाधनत्वात् प्रासादवदिति ।"–प्रश० किरणा० पृ० १७५ । (२) अशक्तेः । (३) अनवस्था स्यादित्यर्थः । (४) "कालः पचति भूतानि कालः संहरते प्रजाः । संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥ कालो विकुरुते भावान् सर्वांल्लोके शुभाशुभान् । कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ॥ कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः । कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥ अतीतानागता भावा ये च वर्तन्ति साम्प्रतम् । तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि ॥"–महाभा० । (५) "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्"–ऋक्० । (६) "प्रकृतेर्महान् ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥"–सांख्यका० ।

किंच, यदि सर्वमचेतन [नं चेतना]धिष्ठितमेव कार्ये प्रवर्त्तते इत्येकान्तः, तर्हि यस्य यत् कर्मादि स एव तस्यापि (तस्या) धिष्ठाता इति व्यर्थम् ईश्वरकल्पनम्। नहि [1]तस्यापि तत्र सन्निधानादपरम् अधिष्ठातृत्वम्। प्रेरकत्वमिति चेत्, [2]अन्यस्याप्यस्तु। 'तदज्ञाने [3]तत्कथम्' इत्यपि नोत्तरत्वात्तूक्तोत्तरत्वात् (न, उक्तोत्तरत्वात्) सुप्तस्याऽज्ञानेऽपि स्वाङ्गावयवप्रेरणं(ण)-दर्शनादिति। ५

यदि पुनरिदं चोद्यम्–शरीरसम्बन्धात् प्राग् अशरीरस्य कथं तदधिष्ठातृत्वमिति? तदीश्वरेऽपि समानमिति दर्शयन्नाह–**जीवोपयोग** इत्यादि।

**[जीवोपयोगयोग्यैरीश्वरस्यानुमीयते।**
**वितनोश्चेच्छा तद्धेतुः शरीरकरणादिभिः ॥१३॥**

**शरीरेन्द्रियादिसङ्गमनुभवतोऽनिष्पन्नकायकरणस्य उत्पत्तुः कथमात्मोपभोगयोग्य-निष्पादनसामर्थ्यम्? तत्परिग्रहात् निष्पन्न[स्य]तत्कृतिर्न संभाव्येत। पारिशेष्यादीश्वरः कारणमिति वैशेषिकादयः। वितनुकरणस्य पुनरिच्छया जीवोपभोगयोग्यशरीरादिकरण कथं संभाव्येत? तदुत्पत्त्रविशेषात्, प्रतिषिद्धं च। तत्परिणामोपगमेऽपि समवायिकारण-त्वस्थित्वाप्रवृत्त्यादेश्च परिणामिन एव संभवात् प्रवर्तनालक्षणाः दोषास्तज्जन्महेतवः कथन्न स्युः? अत एव कर्मसम्बन्धोपपत्तेः। चेतनकृतं किञ्चिदुपभोगयोग्यं संप्रेक्ष्य सर्वत्र कल्पनायां सतनुकरणकृतिः किन्न प्रसज्येत? तथा च अनवस्था। दृष्टव्यतिक्रमे स्वकर्मणः तत्सामर्थ्यं कल्पयितुं युक्तम्।]** १० १५

**च** शब्दो[३७८ क]अप्यर्थो भिन्नप्रक्रमः '**ईश्वरस्य**' इत्यस्यानन्तरं द्रष्टव्यः। न केवलमन्यस्य अनीश्वरस्य अपि वी[तु ई]**श्वरस्यापि**। किंभूतस्य? **वितनोः** अशरीरस्य। किम्? **अनुमीयते**। कैः? इत्याह–**शरीरका(क)रणादिभिः** आदिशब्दाद् भुवनादि-परिग्रहः, अभेदोपचारात् तद्गताः कार्यत्वादयः **शरीरकरणादयः** उच्यन्ते। किंभूतैः? इत्याह–**जीवापयोगयोगैः (जीवोपयोगयोग्यैः)** ईश्वराद् अन्य(न्ये)**जीवा** गृह्यन्ते, तस्य '**ईश्वरस्य**' इत्यनेन अभिधानात्, तेषामु**पयोगः** तज्जननव्यापारः तत्र **योग्यैः** यथा ईश्वरेण ते निष्पादयितुं शक्याः तथा अन्यैरपि इत्यर्थः। तस्य का[4] किमनुमीयते? इत्याह–**इच्छा** सिसृक्षा। किंभूता? इत्याह–**तद्धेतुः** शरीरकरणादि[5]कारणादिकारणम्। यथा वितनोरन्यस्य तद्धेतुः सो(सा)नानुमीयते तथा ईश्वरस्यापीति भावः। यदि वा **च**शब्दः अवधारणे, ईश्वरस्येव(स्यैव) किमनुमीयताम्? २० २५

ननु यथा ईश्वरस्य [6]तत्करणे सामर्थ्यम्, नैवमन्यस्येति चेत्, युक्तमेतद् यदि तथादर्शनं स्यात्। नहि दृष्टेऽनुपपन्नं नाम। अथ ईश्वरेण सर्वस्य जननात् किमन्येनेति चेत्? एतदपि युक्तं यदि कुतश्चित् सिद्धं स्यात्, यावता शरीरादिकार्यदर्शनात् ईशोऽप्यनुमीयते। [7]तच्च नानाविधमिति ३०

(१) ईश्वरस्यापि। (२) अस्मदादेरपि। (३) प्रेरकत्वम्। (४) 'का' इति प्रश्ने। (५) 'कारणादि' इति निरर्थकं पुनर्लिखितम्। (६) शरीरादिकरणे। (७) कार्यम्।

च सहकारि निपेद्धुमशक्यम् । न चेशस्तथा । अथ तस्य[1] तत्सामर्थ्यं तेन[2] क्रियते [१७७क] तद्दर्शनेन क[र्म] अन्यते न कामम् इति कथं स[3] तत्सहकारी तज्जनयति ? इममपि स[4] एव इति चेत् कुत एतत् ? अन्यतः तथाविधजनककर्मोऽसंभवादिति चेत् ईश्वरस्य तत्कार्य[5]प्रयत्नने कुतः सामर्थ्यमायातम् ? [6]अहेतुकम् सर्वत्र स्यात्, इतरथा अन्यत्रापि किं हेतो

५ कार्यैनियमकल्पनेन ? तत्सामर्थ्यस्य नित्यत्वात्सोप इति चेत् न तन्निषेधात् । स्वहेतोः इति चेत् कर्मणोऽपि तत एव इति किम् ईशेन ? इति स्थितम्—यथा इत्यादि । अथ कर्मणा ईश्वरः प्रेरितः, तेन वा कर्म कार्यकृत् इष्यते तत्राह—विपर्यये वा इत्यादि । उक्तक्रमाद् अन्यः क्रमो विपर्ययः, स च सेश्वरकर्मवादिमते[ऽ]नन्तर एव संभवति, तस्मिंश्च प्रवर्त्तने पारमैश्वर्यानुपपत्तेः कर्मैव तन्निमित्तम् । तथाहि—पृथग्जनवत् कर्मणा प्रेरितस्य तस्य[7] प्रवर्त्तने न ततो विशेषः ।

१० किञ्च तेन[8] प्रेरितः, पृथग्जन एव स (स्व) कार्यं विदधातु किमीशप्रेरणेन ? अचेतनमपि तत् ईशं प्रेरयति न तथा ([9]तत्र)नमिति [किं]कृतो विभागः ? 'अन्येन (अथ तेन[10]) प्रेरितमीशं प्रेरयति' इत्ययुक्तम् अनवस्थापत्तेः । तन्न कर्म ईश्वरं प्रेरयति । नापि ईश्वरः कर्म, पारमैश्वर्यानुपपत्तेः । तथाहि—वरं कार्यमेव तेन कृतं किं कर्मप्रेरणेन ? [11]यस्य कार्येऽसामर्थ्यं तस्य [12]तत्प्रेरणे सामर्थ्यम् अतिमहदेयम् । कर्मणः एव वा [13]तदस्तु किं तत्प्रेरकेण ।

१५ अथ अचेतनं तद्[14] वास्यादिवत् चेतना निमित्तमेव (चेतनाधिष्ठितमेव) कार्ये [प्र]वर्तते[15] तदधिष्ठापकस्य ज्ञानादे[ः] कथं चेतनत्वं घटादिवत् ? असमवायिवत् स्यादिति चेत् तदेतत् [16]यस्तता समुदायहत्वम् (तः समुदायत्वम्) असमवायेरपि [17]ततो भेदे, न चेतनत्वम् । ज्ञानसमवायाच्चेतनत्वं चेत् न तन्निषेधात्[18] । ततोऽपि सर्वगतत्वेनाऽविशेषात् किं च ज्ञानम् ? अन्यत्र सम्बन्धा(न्ध)विषयेऽपि सम्बन्धविशेष इष्यते कुत एतत् ? स्वभाव[त] इति चेत्, [19]तदपि

२० कुतः ? तथा दर्शनात्[20] युक्तमेतद् यदि गगनादिपरिहारेण ईश्वर एव किं देव (क्विच्चिदेव) ज्ञानं दृश्येत । स एव पश्यतीति चेत् कोशपानात्[21] प्रत्येयम् । एतेन योगिनि(न) श्चिन्तिताः । स्वभावत एव च सम्बन्धिनियमे किं समवायेन ? इहेति प्रत्ययोऽपि [22]तत एव भविष्यति । तत्र परस्य कश्चित् चेतनो यः तस्य[23] अधिष्ठाता स्यात् । ज्ञानात(च)स्याभेदे अन्यत्रापि गुणगुणिनोर्भेदैकान्तो विशीर्येत । तथा च अनीश्वरस्य अनित्यता[न्य]दिस्वभावस्य कार्यत्वम् इति,

२५ [24]तद्दृष्टान्तेन ईश्वरस्यापि [25]तत्प्रसक्तमिति तस्यापि अन्यो धीमान् कर्ता ततः पारमैश्वर्यानुपपत्तिः इति ।

---

(1) कर्मेव । (2) ईशेन । (3) ईश्वरः । (4) कार्येषु । (5) ईश्वर एव । (6) यदि कारणं विना तर्हि । (7) ईश्वरस्य । (8) कर्मणा । (9) कर्म । (10) पृथग्जनवत् । (11) कर्मणा । (12) ईश्वरस्य । (13) कर्मप्रेरणे । (14) कार्योत्पादकत्वमस्तु । (15) कर्म । (16) 'प्रधानपरमाण्वदृष्टान्यपि कार्यं प्रवृत्तौ बुद्धिमत्कारणाधिष्ठितानि प्रवर्त्तन्ते अचेतनत्वात् वास्यादिवत् ।'—न्यायवा पृ. ४५७ । (17) ईश्वरस्य । (18) असिद्धस्य उदाहरणत्वेन कथनं कुतम् । (19) चैतन्यात् ज्ञानाद्वा । (20) समवायनिराकरणात् । (21) ईश्वरस्यैव ज्ञानमिति । (22) इति चेत् । (23) एतद्गुणभावं समवायादेव बुद्धी समायातमिति । (24) समवायेन । (25) कर्मणः । (26) असमवायिदृष्टान्तेन । (27) कार्यत्वं ।

किंच, यदि सर्वमचेतन [नं चेतना]धिष्ठितमेव कार्ये प्रवर्त्तते इत्येकान्तः, तर्हि यस्य यत् कर्मादि स एव तस्यापि (तस्या) धिष्ठाता इति व्यर्थम् ईश्वरकल्पनम्। नहि [1]तस्यापि तत्र सन्निधानादपरम् अधिष्ठातृत्वम्। प्रेरकत्वमिति चेत्, [2]अन्यस्याप्यस्तु। 'तदज्ञाने [3]तत्कथम्' इत्यपि नोत्तरत्वात्क्तोत्तरत्वात् (न, उक्तोत्तरत्वात्) - सुप्तस्याऽज्ञानेऽपि स्वाङ्गावयवप्रेरणं(ण)-दर्शनादिति। ५

यदि पुनरिदं चोद्यम्—शरीरसम्बन्धात प्राग् अशरीरस्य कथं तदधिष्ठातृत्वमिति? तदीश्वरेऽपि समानमिति दर्शयन्नाह—**जीवोपयोग** इत्यादि।

**[जीवोपयोगयोग्यैरीश्वरस्यानुमीयते।**
**वितनोश्चेच्छा तद्धेतुः शरीरकरणादिभिः ॥१३॥**

**शरीरेन्द्रियादिसङ्गमनुभवतोऽनिष्पन्नकायकरणस्य उत्पत्तुः कथमात्मोपभोगयोग्य-** १० **निष्पादनसामर्थ्यम्? तत्परिग्रहात् निष्पन्न[स्य]तत्कृतिर्न संभाव्येत। पारिशेष्यादीश्वरः कारणमिति वैशेषिकादयः। वितनुकरणस्य पुनरिच्छया जीवोपभोगयोग्यशरीरादिकरण कथं संभाव्येत? तदुत्पत्त्रविशेषात्, प्रतिषिद्धं च। तत्परिणामोपगमेऽपि समवायिकारण-त्वस्थित्वाप्रवृत्त्यादेश्च परिणामिन एव संभवात् प्रवर्तनालक्षणाः दोषास्तज्जन्महेतवः कथन्न स्युः? अत एव कर्मसम्बन्धोपपत्तेः। चेतनकृतं किञ्चिदुपभोगयोग्यं संप्रेक्ष्य सर्वत्र** १५ **कल्पनायां सतनुकरणकृतिः किन्न प्रसज्येत? तथा च अनवस्था। दृष्टव्यतिक्रमे स्वकर्मणः तत्सामर्थ्यं कल्पयितुं युक्तम्।]**

**च** शब्दो[३७८ क]अप्यर्थो भिन्नप्रक्रमः '**ईश्वरस्य**' इत्यस्यानन्तरं द्रष्टव्यः। न केवलमन्यस्य अनीश्वरस्य अपि वी[तु ई]**श्वरस्यापि**। किंभूतस्य? **वितनोः** अशरीरस्य। किम्? **अनुमीयते**। कैः? इत्याह—**शरीरका(क)रणादिभिः** आदिशब्दाद् भुवनादि- २० परिग्रहः, अभेदोपचारात् तद्गताः कार्यत्वादयः **शरीरकरणादयः** उच्यन्ते। किंभूतैः? इत्याह—**जीवापयोगयोगैः (जीवोपयोगयोग्यैः)** ईश्वराद् अन्य(न्ये)**जीवा** गृह्यन्ते, तस्य '**ईश्वरस्य**' इत्यनेन अभिधानात्, तेषामु**पयोगः** तज्जननव्यापारः तत्र **योग्यैः** यथा ईश्वरेण ते निष्पादयितुं शक्याः तथा अन्यैरपि इत्यर्थः। तस्य का[4] किमनुमीयते? इत्याह—**इच्छा** सिसृक्षा। किंभूता? इत्याह—**तद्धेतुः** शरीरकरणादि[5]कारणादिकारणम्। यथा २५ वितनोरन्यस्य तद्धेतुः सो(सा)नानुमीयते तथा ईश्वरस्यापीति भावः। यदि वा **च**शब्दः अवधारणे, ईश्वरस्येव(स्यैव) किमनुमीयताम्?

ननु यथा ईश्वरस्य [6]तत्करणे सामर्थ्यम्, नैवमन्यस्येति चेत्, युक्तमेतद् यदि तथादर्शनं स्यात्। नहि दृष्टेऽनुपपन्नं नाम। अथ ईश्वरेण सर्वस्य जननात् किमन्येनेति चेत्? एतदपि युक्तं यदि कुतश्चित् सिद्धं स्यात, यावता शरीरादिकार्यदर्शनात् ईशोऽप्यनुमीयते। [7]तच्च नानाविधमिति ३०

(१) ईश्वरस्यापि। (२) अस्मदादेरपि। (३) प्रेरकत्वम्। (४) 'का' इति प्रश्ने। (५) 'कारणादि' इति निरर्थकं पुनर्लिखितम्। (६) शरीरादिकरणे। (७) कार्यम्।

ननु मम बुद्धिमत्कारणमात्रसिद्ध्या प्रयोजनम्, तत्कारणम् ईश्वरो भवतु परो वा परिणाम्येव इति चेत्, अत्राह–**समवायीत्यादि**। **तस्य** ईश्वरस्य अन्यस्य वा **परिणामोपगमेऽपि**, अपिशब्दः पक्षान्तरसूचकः। कुतः तदुपगमः ? इत्याह–**समवायीत्यादि**। **समवायिकारणत्वं च स्थित्वाप्रवृत्तिश्च आदिशब्देन** निमित्तकारणत्वादिपरिग्रहः तस्य **परिणामिन एव संभवात्** इति। तत्र दूषणम्–**प्रवर्त्तनेत्या** [दि। **प्रवर्तनालक्षणा**] **दोषा** रागादयः **कथं न स्युः** नैव ५ ईश्वरस्येति। किंभूताः ? इत्यत्राह–**तज्जन्महेतवः** तच्च तनु (तत्) शरीरेन्द्रियादिसम्बन्धलक्षण **जन्म** तस्य **हेतवः**, तस्यापि[1] संसार इतरजीववत् स्यादित्यर्थः। तस्य दोषास्तित्वे किं प्रमाणमिति चेत् ? अत्राह–[३७९ख] प्रवर्त्तमानानां जन्तूनां प्रेरणा **प्रवर्तना** सैव **लक्षणं** चिह्नं येषां ते तथोक्ताः। तथाहि–यः परममिष्ट (परम इष्टानिष्ट)कर्मणा योजयति स रागादिनामवे (दिमानेव) तनो यथा ध्यानो [?] योजयति च तेन परमीश्वर इति। रागाद्यभावेऽपि तस्य तत्प्र- १० वर्त्तना[ऽ]विरोधादनैकान्तिको हेतुरिति चेत्, अत्रोत्तरम् **'तन्वादिकरणाद्'** इत्यादि भविष्यति। सतोऽपि (सन्तोऽपि) तस्य रागादयो न कर्मसम्बन्धकारण देवताविशेषत्वाद् यथा मयूरस्य विष न रमण (मरण)कारणम्। **अत** एव दोषसद्भावत एवं(व) **कर्मसम्बन्धोपपत्तेः तज्जन्महेत[वः] कथन्न स्युः** इति ? अन्यथा सर्वस्यापि तैतस्तत[2]सम्बन्ध(न्धा)भाव[3] इति मन्यते। १५

एवं तायत् (तावत्) स्वयुक्त्या ससारित्वं तस्य[4] दर्शनम् (दर्शितम्)। अधुना परयुक्त्या दर्शयन्नाह–**चेतनकृतम्** इत्यादि। **चेतनकृतं सूपादि किञ्चित्**, न सर्वं तथा, प्रमाणाभावात् परस्य इति निरूपितम् *"भूता भव्याः" [सिद्धिवि० ३।८] इत्यादिना। किंभूतम् ? इत्याह–**उपभोगयोग्यम्** प्राणिना(नां) भोग(ग्य)मित्यर्थः। तत्किं कृत्वा ? इत्याह–**संप्रेक्ष्य** दृष्ट्वा **सर्वत्र** सर्वस्मिन् उपभोगयोग्यकल्पनायां क्रियमाणाया **'चे[त]नकृतत्वस्य'** इति सम्बन्धः। तथा २० च परप्रयोगः–राज्यादिवा(व)न्नरेन्द्रादिभिः केनचित् चेतनावता कल्पित भुज्यते, भोग्यत्वात्, सूपादिवत्। योऽसौ ते (अन्ते)[5] कः सभवावान् (स भगवान्) महेश्वर इति। तत्र परिहारः–**सतनुकरणकृतिः** तनुकरणवता करणम् उपभोगयोग्यस्य किन्न **प्रसज्येतो** च (ज्येत ?) अत्रापि स एव प्रयोगो दृष्टान्तोऽपि सूपकार एव **तथा च** तेना(न) च स्वशरीरादिकम् अन्ये[न] [३८०क] तदनुभुज्यते, तेनाप्यन्येन **इत्यनवस्था** इति भावः। अथासौ[6] अतनुकरण इष्यते अन्येन २५ वा दत्त शरीरादि भुङ्क्ते, न, अत्राह–**दृष्टेत्यादि**। परोपभोगयोग्यस्य सूपादेः करणम्, दान (नं) वा सतनुकरणस्य सूपकारादेः अन्यदत्त जातस्य(प्राप्त) वा **दृष्टम्** **तद्व्यतिक्रमे** क्रिया [?] क्रियमाणे **स्वकर्मणः** भोक्तुर्यदात्मीयं कर्म तस्य **तत्सामर्थ्यं** भोक्तुपभोगयोग्यकरणसामर्थ्यं **कल्पयितु युक्तम्**। यथा [अ]चेतनस्य चेतनानधिष्ठितस्य[7] तत्सामर्थ्यं न दृष्ट तथा चेतनस्य वितनुकरणस्यापि न दृष्टम्। कल्पनम् अन्यत्रापि समानमिति भावः। ३०

---

(१) ईश्वरस्य। (२) दोषत्व। (३) कर्मसम्बन्धाभाव स्यात्। (४) ईश्वरस्य। (५) परमात्मा। (६) ईश्वर.। (७) उपभोगयोग्यकरणसामर्थ्यम्।

(क्षमोऽपि औ)दासीन्यं न [ल]भत इति, तत्राह–**सकर्मणां वा** इत्यादि । **सकर्मणामेव** न निष्कर्मणा **जन्तूनां देहादिकर्मणि हेतुः** । का ? **प्रवृत्तिः** । कस्याः ? **ईश्वरेच्छायाः** अद्येषा (अन्येषा) तत्प्रेर[क]कर्माभावादिति मन्यते । अत्र दूषणम्–**प्राणिस्थ**मित्यादि । **प्राणिस्थं देहादिहेतुः किन्न ईश्वराद्विना** ईश्वरमन्तरेण **'सकर्मणाम्'** इति सम्बन्धः । एवं मन्यते–यया प्रत्यासत्त्या कर्माणि ईश्वर प्रेरयन्ति तयन्ति[1] तया देहादि हादिकुन्विति (कुर्वन्तु इति) । ५

ननु देहादिकर्मणीश्वरेच्छायाः प्रवृत्तिर्हेतुरिति पूर्वः पक्षः कृतः, दूषणं पुनरीश्वर एवोच्यते, [३८१क] पूर्वपक्षानुसारिणा च दूषणेन भवितव्यमिति चेत्, न, तास्थाता[तात्स्थ्यात् त]च्छब्दमिति इच्छया ईश्वरः तेन च साध्य इति न दोषः ।

कारिका विवृण्वन्नाह–**मुक्तात्मनाम्** इत्या[दि] । **मुक्तात्मनां** तनुकरणादिदुःखोपयोराम कुर्वन् कुतः (पयोगमकुर्वतः) अकर्मकत्वात्तेषाम्, सकर्मणामेव कुर्वन्ति इत्यर्थः । **कर्म** 'तत्रोपसी (ची)यत इति अध्याहारः । ततः किम् ? इत्याह–**स्वयमित्यादि** । **स्वयं स्वस्य प्रेरकम् ईश्वरोऽपेक्षते कर्मे**[त्या]**यवश्य (श्यं)** नियमेन । तथा वा (चा) चेतनं (न) कर्ममाहात्म्याद् नियमेन । **यतः** यस्मात् सामर्थ्या[त्] **तदिच्छामात्रम्** ईश्वरेच्छामात्र सन्निधापयति तत एव माहात्म्यात् देहादिकं **ततो निष्पादयेदचेतनम् किम् ईश्वरेच्छया** ? दूषणान्तरमाह–**तद्व[र]**मित्यादि । १० १५

ननु न केनचित् प्रेरितोऽसौ[2] तन्निमित्तम्, अपि तु क्रीडया इति चेत्, अत्राह–**मुक्तात्मनोऽपि** इत्यादि ।

**[मुक्तात्मनोऽपि देहादि कुर्वन् स्यात् क्रीडनोऽन्यथा ।**
**बुद्धिमान् योजयेज्जन्तून् कथं भवितव्यतावशात् ॥१६॥** २०

**यदि··· ।]**

न केवल सकर्मणाम् अपि तु **मुक्तात्मनोऽप्यकर्मणोऽपि कुर्वन् स्यात्** देहादीः (दि) क्रीडा(ड)नः **नान्यथा** । न सिष्ट (शिष्ट) परिहारेण राजा कृतदोष वधबन्धनादिना योजयन् क्रीडनो नाम । मुक्तात्मनोऽपि तत्करणे सिष्ट (शिष्टः) न स्यादिति चेत, किं क्रीडनस्य (डनः स्यात् ?) । तैया तस्यापि करोतीति चेत, अत्राह–**किं बुद्धिमान्** नैव क्रीडन इति सम्बन्धः । २५

किंच, यदि क्रीडनः सन् देहादीन् देहिना विदधाति महेश्वरः, तदा शुभकारिणोऽपि नरकादिना योजयेद् अशुभकारिणोऽपि स्वर्गादिना इति तदाराधनादिकमनर्थकम्; एतदेवाह–**योजयेदि** [त्यादि] । **योजयेत् जन्तून्** 'देहादिभिः' [३८१ख] इति [वि]भक्तिपरिणामेन सम्बन्धः । कुतः ? इत्याह–**भवितव्य[ता]वशात्** न शुभाशुभकर्मवशात **कथं** नैव सङ्करेण योजयेत् इत्यर्थः । ३०

कारिकार्थं स्पष्टयन्नाह–यदीत्यादि । सर्वं गतार्थम् ।

(१) 'तयन्ति' इति पुनर्लिखितम् । (२) ईश्वर । (३) क्रीडया ।

चे (नन्वे)तस्यं परिणामित्वे कार्यत्वेन अन्येश्वरपूर्वकत्वम् अनवस्थाकारि, अन्यथा अनैकान्तिको हेतुः इति चेत्, अयमेव तर्हि दोषोऽस्तु किमपरेण इति चेत्, न, अन्यथा व्याख्यानात्। एवकारो निपातत्वाद् अपिशब्दार्थः, ततः **'अन्यथाप्युप च (प्युपपद्ये)-रंस्ततो नेश्वरहेतवः'** इत्यर्थः। **'नैव तनुकरण'** इत्यादि वृत्तिर्भविष्यति। यदि वा, य एवं वदति 'नित्योऽशरीरो महेश्वरः शरीरादिकारणम्' इति, तदपेक्षया एवकारो[ऽव]धारणे, ५ **अन्यथैव** न भाव **एवोपपद्येरन् ततो न ईश्वरहेतवो** विरुद्धत्वात्। एवमनर्थं (एवमर्थं) चेश्वरग्रहणम्, इतरथा बुद्धिमद्ग्रहण कुर्यात्। अत्र वृत्तिः **स्वारम्भक** इत्यादि।

कारिकां विवृण्वन्नाह–**तनुकरणे**त्यादि। **स्थित्वा प्रवृत्तिः अर्थक्रियाकारित्वं वा [न] हेतुः**। कुतः ? **व्यभिचारात्**। अयमपि कुतः ? इत्याह–**नित्येषु** इत्यादि। **स्वयम्** आत्मना ईश्वरवादिनाऽभिमतत्वा[त्] स्थित्वाप्रवृत्तेः अर्थक्रियाकारित्वस्य च। नित्यग्रहणेन १० तत्रायम् बुद्धिमत्कारणाभाव दर्शयति, **आत्म**ग्रहणेन स्वकार्येऽन(ऽन्य)चेतनाधिष्ठितत्वाभावम्, अन्यथा अनवस्था स्यात्। **स्वारम्भकावयवसन्निवेशनिमित्तत्वं स्यात्** 'हेतुः' इत्यनुवर्त्तते। कस्य ? इत्याह– **मतनु (सतनु)करणस्य**। कस्येव ? इत्याह–**घटादेरिव**। अनेन इष्टसाध्य-विपर्ययसाधनाद् विरुद्धमुक्तम्। एतेन कार्यत्वादिकं चिन्तितम्।

यस्तर्हि सशरीरमनित्यज्ञानम् ईश्वरं कारणमिच्छति तस्य कथ दोषः ? इत्याह–**परेषाम्** १५ इत्यादि। **परेषाम्** [३८२ख] जैनैः **इष्टमेव**। किम् ? इत्याह–**बुद्धिमत्कारणपूर्वतामात्रं** 'तनु-करणभुवनादीनाम्' इति सम्बन्धः। च शब्दः पूर्वसर्वदूषणसमुच्चयार्थः। एवं मन्यते–ईश्वरस्य[1] ज्ञान-तनुकरणभुवनादीन्युपकरणानि यदि तत्कर्मणो[3] भवन्ति परस्यापि तत एवेति किम् ईश्वरेण ? तदधिष्ठितादिति चेत्, एतदपि नाऽनेन उत्सृष्टम्। ईश्वरादेव इति चेत्, तद्व्याघातः अकर्म-वादश्च। अति (अनि)त्यज्ञानस्य दे (महे)श्वरस्य सकलोपकरणादिज्ञान प्र मा ण सं ग्र ह- २० भा ष्ये निरस्तम्।

किंच, स्वतन्वादिकरणे यद्यत् याव[त्] परं तदपेक्षेत संसारित्वम् इतरवत्। अनपेक्षणे अन्यतन्वादिकरणेऽपि किं तदपेक्षणेन ? वितनुकरणोऽपि[4] स्वस्य देहादिकं सम्पादयन्ति (यति) न परस्य इति महती प्रेक्षापूर्वकारिता ! एतदेव दर्शयन्नाह–**वितनुकृतेः** इत्यादि। निगमनमाह–**तदि**त्यादि। २५

क ण च र स्य अ क्ष पा द स्य च देहादीनाम् ईश्वरं कारणं वदतः स्ववचनविरोधम् इदानीं दर्शयन्नाह–**'संसार'** इत्यादि।

**[संसारसुखसंवित्तिक्षयात् मोक्षात्मकं वदन्।**
**देहादेरीश्वरो हेतुर्यदि शास्त्रं विहन्यते ॥१८॥**

सू त्र का रः आत्मादितत्त्वज्ञानात् निःश्रेयसाधिगमं परं पुरुषार्थमाह। स एव ३० संसारं परं सूचयति, यतः देहादिरीश्वरहेतुः। तदनयोः परस्परविरोधात् सू त्र का र स्य

(१) ईश्वरस्य। (२) नित्यस्य ईश्वरस्यापि अन्यचेतनाधिष्ठितत्वे। (३) ईश्वरकर्मण। (४) अन्यजनस्यापि। (५) ईश्वर।

बुद्धिमत्त्वं कथं कल्प्येत ? कः प्रेक्षावानपवर्गमपेतन्यं प्रतीयते तद्विपर्यं शास्त्रं कुर्यात् यतो नेश्वरो बुद्धिमान् ? तच्च, अन्यस्याऽसम्भवात् ।]

देह आदिर्यस्य सकलकार्यग्रामस्य स तथोक्तः तस्य ईश्वरो नित्यो व्यापी यदि हे (हेतुः) कारणे (स्र्वे) क ण च रा वेर्वेचन स (नं तदेव)चा विहन्यते बाध्यते । किं कुर्वन् ? इत्याह–वदन् कथयन् । किम् ? इत्याह–मोक्षास्कथ (मोक्षात्मकम्) मोक्ष मित्यर्थः । कुतः ? इत्याहा (ह–) संसार[सुख]संवित्तिक्षयात्, संसारो जन्ममरणादिप्रबन्धः सुखमप्यमुपलक्षणं दुःखादेः संवित्ति[ः]बुद्धिः दुःखादिवित्तेः चेतेऽपि [२८३क] ग्रहणे (दुःखादिवित्त संवित्तेरपि तेनैव ग्रहणे) प्राप्ते तदुपादानं पृथक् मोक्षस्यास्याऽमुक्त्यौ प्रतिपादयितुम्, तासां क्षयात् । एतदुक्तं भवति–यदा सर्वोत्पत्तिमताम् एकस्वभावो नित्यो व्यापीश्वरः कारणम् तदा सर्वं सर्वदा सर्वेषामविशेषेण देहादय इति न तत्क्षयात् मोक्षः । तदुक्तं न्या य वि नि श्च ये–

*"कारणस्याक्षये तेषां कार्यस्योपरतिः कथम् ।" [न्यायवि० १।१०३] इति ।

भव (न च) नित्यस्या (स्य)भावे चा (अन्या)ऽविक्षयस्य काचिदपेक्षा इत्युक्तम् । ननु तत्क्षय (ननु तत्क्षय)स्यापि स एव कारणं तत्कथं तदनुपपत्तिरिति चेत्; संसारैर्निर्वाणपुर प्रवेशः । ततो मोक्षमिच्छता मत्स्यादिवद् ईश्वरोऽपि तत्कारणं नाभ्युपगन्तव्य इति ।

यदि चैवं (वा, एवं) व्याख्यायते–देहादी(देरी)श्वरो हेतुः यदि । किं कुर्वन् ? वदन् ? किम् ? शास्त्र[म्] । किं भूतम् ? इत्याह–मोक्षात्म(त्म)कं मोक्षस्य [प्र]तिपादकं यस्मिन्निति । कुतः ? इत्याह–संसारेत्यादि । तर्हि विहन्यते परस्परविरोधेन अर्थे (ईश्वरे) निराक्रियते । तथाहि–सर्वथा आत्मनो देहादिकर्तृत्वं प्रतिपद्यमान एव संसारोदिश्वो (संसारादिक)वान् मोक्षकं (आत्मकं) शास्त्रं वदन् तदभावं ब्रवीत्येव विरोधः । अथ तत्कार्यं तदपीदं [न] भवत्यन्यतो भावात् न सर्वमीश्वरकृतम्, तेनैव व्यभिचारात् ।

अथवा, यदुक्तम् 'कर्मोपरमः किं बुद्धिमानचेतन (मचेतनम)तिष्ठते संसारिणं चाऽऽस्थानम् इति ? तत्र (तत्र) परकीयं तद्बुद्धिमत्त्वसाधनमाशङ्क्य दूषयन्नाह–संसारेत्यादि । देहादेरीश्वरो हेतुः यदि 'प्रतीयेत [इ]त्यध्याहारः । किं कृत्वा [२८३ख] तद्बुद्धिरसौ ? इत्याह–संसारसुखसंवित्तिक्षयात् तत्क्षयमाश्रित्य सुखदुःखसंवित्ती[ः] समाश्रित्य इति यावत् (यावत् । एव)मर्थं च संसारग्रहणम्, इतरथा सुखसंवित्तिग्रहणमेव कुर्यात् । किं कुर्वन् समाश्रित्य तद्धेतुः प्रतीयते ? इत्याह–वदन् मोक्षात्मकं शास्त्रम्, मोक्षग्रहणं तदुप लक्षणस्योपलक्षणार्थम् । अत्र दूषणम् विहन्यते ईश्वर इति । तथा–यदि स्वयं सुखं सर्वे यत्नं चरेच्छेत् (चेष्टस्येदम् ) तदेव परेषामपि विधातव्यम्, न क्षयीयादि । यदि पुनः न क्षयीयात् ये

(१) सुखदुःखसंवित्तिपदस्य ग्रहणम् । (२) संसारसुखसंवित्तीनाम् । (३) 'कार्यस्योपरमः कथम्'– न्यायवि० । (४) ईश्वर एव । (५) संसारावस्थायामेव मोक्षः स्यादित्यर्थः समर्थकारणसद्भावात् । (६) मत्स्यकारादेः । ( ) कल्याणमयात्सेन ।

च [?] आत्मानोऽपि तदेव कुर्यात । अथ कर्मणः सहकारिणः परत्र भावात्तत्रैव तत्कुर्या [त्] नात्मनि विपर्ययात्, कर्मापि इष्टतया आत्मनि विधातव्यम्, अन्यथा नान्यत्रापि । तस्य[2] तदा [तद]हेतुत्वे[3] कथमव्यभिचारो हेतूनाम्[4] ? अथ[वा] शास्त्र(स्त्रं) विहन्यत(ते) प्रमाणेन इति व्याख्यातव्यम् । अत्र '**कः प्रेक्षावान्**' इत्यादि वृत्तिर्भविष्यति ।

कारिका व्याख्यातुमाह–**सू त्र का र** इत्यादि । **सू त्र का रः** अ क्ष पा दा दिः **परं पुरुपार्थमाह**। किम् ? **निःश्रेयसाधिगमं** निःशेषवैशेपिकगुणप्रहाररूपनिर्वाणप्राप्तिम् । कुतः ? इत्याह–**आत्मादेः तत्त्वज्ञानात्**, नेश्वरात, अन्यथा तद्वैफल्यम । ईश्वरा(रो) यावत तत्त्वज्ञानोत्पादनात्याया (नाया)त्मान क्लेशयति तावन्मोक्षमेव विदधातु इत्येतदनेन दर्शयति । स एव **सू त्र का रः संसारं मुक्तेः परं** प्रकृष्टं **सूचयति**। कुतः ? इत्याह–**देहादिरीश्वरहेतुः 'इति'** शब्दोऽत्र द्रष्टव्यः। इत्येवमाह **यतः**। निगमयन्नाह–**तदि**त्यादि । यत एवं **तत्तस्मात्** [३८४क] **अनयोः सू त्र का र** वचसोः **परस्परविरोधात् बुद्धिमत्त्वं कथं कल्प्येत सू त्र का र स्य** इति । यदि वा, **सूत्रकारो** महेश्वरः सर्वस्य तत्पूर्वकत्वात अपर पूर्ववत् । अय तु विशेषः **बुद्धिमत्त्वं कथं कल्प्येत 'ईश्वरस्य'** इति । अथवा, अ क्ष पा दा त्यिग्रेप (अ क्ष पा दो निः-श्रेय)**साधिग[म]माह, देहादिः सूचयती**ति वाक्यभेदेन व्याख्यातव्यम् । **'देहादिहेतुरीश्वरः'** इति च पाठोऽस्ति । तत्राप्येवं वाक्यभेदः **तदनयोः ईश्वरकारयोः सूत्रकारये** (ईश्वरसूत्रकारयोः) **बुद्धिमत्त्वं कथं कल्प्येत ?** परस्य ईश्वरबुद्धिमत्त्वसाधक '**कः**' इत्याद्याशङ्कते दूपयितुम्–**कः प्रेक्षावान्** अतीन्द्रियार्थदर्शी **अपवर्गम्** उपलक्षणमेतत् अशेपाऽऽत्मादितत्त्वस्य । किंभूतम् ? **अचैतन्यं** चेतनारहितत्वं **प्रतीयते**, त (यतः) **तद्विपयं शास्त्रं कुर्यात्** न कश्चित् ? सुगतादेरसम्यधा(रसम्बद्धा)भिधायित्वात् क ण च रा दे श्च तदुपदेशादेह(देव) समीहितसिद्धेः **यतोऽन्यस्य** तंप्रतिपन्ना (तत्प्रतिपत्तौ) **नेश्वरो वुद्धिमान्** । **यत** इति वाऽऽक्षेपे **यतो न बुद्धिमान् ?** तद्वानेव । अत्र दूषणमाह–**ने**त्यादि । यदुक्तं **तन्न** । कुतः ? उक्तप्रकारा**दन्यस्य** मुक्तिप्रकारस्य **संभवावेवमन्यन्ते** (**संभवात्** । एव मन्यते) यथा ईश्वरस्य अनन्तज्ञानस्वभावस्य सतः तद्विवनुक (तद्विघातक)कर्मापाये यदा सर्वज्ञत्वं न कदाचिदा(द)चैतन्यं तथाऽन्यस्यापि । विशेषः पुनरयमेव भवन्स्यापगमेन (मलस्यापगमेन) कस्यचित् स्वाभाविकस्तदपायोऽन्यस्योपायात्, ततोऽन्या(न्यो) विमुक्तिं प्रति यतत इति ।

एतदेव दर्शयन्नाह–**आत्मलाभ**मित्यादि ।

> **[[10]आत्मलाभं विदुर्मोक्षं जीवस्यान्तर्मलक्षयात् ।**
> **नाभावं नाप्यचैतन्यं नचैतन्यमनर्थकम् ॥१९॥**

---

(१) अन्यप्राणिषु । (२) कर्मण । (३) ईश्वराहेतुकत्वे । (४) कार्यत्वादीनाम् । (५) बुद्धिसुखदु खेच्छाद्वेषप्रयत्नधर्माधर्मसस्कारा विशेषगुणा । (६) तत्त्वज्ञान व्यर्थं स्यात् । (७) महेश्वरपूर्वकत्वात् । (८) व्याख्येयम् । (९) ईश्वरोपदेशादेव । (१०) तुलना–"न हि गुणादिविनाशात् जड , गुणगुणिविनाशात् शून्य , भोग्यविरहात् तदभोक्ता"–लघी० स्ववृ० श्लो०७६ । "स्वरूपावस्थिति पुसस्तदा प्रक्षीणकर्मण । नाभावो नाप्यचैतन्यं न चैतन्यमनर्थकम् ॥"–तत्त्वानु० श्लो० २३४ ।

न वै निर्वाणम् अभवितुः निरात्मकम्[1] अशेषगुणवैकल्यं[2] सात्मकं दृश्य[दर्शन रहितम्][3] क्षिप्य द्रव्यान्तरवत् । किं तर्हि ? मल[क्षयात्] जीवस्य आत्मलाभं मणिवत् । अन्यथा व्यर्थः[4] प्रयासः । तथा सति नेश्वरो बुद्धिमान् अशेषगुणवैकल्यरूपमोक्षाभिधानात् , न कणभक्षादि[5] तदर्थे सद्वचनात् प्रवृत्तेः , परस्परविरुद्धाभिधानात् बुद्धवत् ।]

१ जीवस्य आत्मलाभम् अ[न]न्तज्ञानादिस्वभावलाभं विदुर्मोक्षं । तल्लाभः (तस्लाभः) कुतः ? इत्याह–अन्तर्मलक्षयात् जीवस्य स्वभावान्यथाभावोऽन्तर्मलम् [१८४ख] तस्य क्षयात् । अनेन सामर्थ्याद् द्रव्यमलक्षयोऽप्युक्तः, तदभावे तदभावात् । नाभावं जीवस्य मोक्षं विदुः तस्याऽप्रमाणत्वात् । नापि तस्याचैतन्यं चेतनारहितत्वम् । किं विदुः ? [मोक्षं] अत एव न चैतन्यमनर्थकं ज्ञातृशून्यं तस्य तं विदुः । स्वपरप्रकाशनलक्षणस्य १० प्रतिबन्धाभावे नितरां प्रकाशाभिव्यक्तिः न पुनरभावः । नहि भानुः अभ्रपटलविलये स्वपरप्रकाशनरूपं विजहाति ।

[कारि]कां विवृण्वन्नाह–नवै नैव निर्वाणक्षिप्याः(क्षिप्यः) । किम्भूतम् सांख्ये (तस्य ! अभवितु) स्वरूपस्थितिमात्रस्य । वैशेषिकनिर्वाणाद् विशेषमाह–निरात्मकम् । तथा न चैव निर्वाणं क्षिप्यः (क्षिप्यः) । किम्भूतम् ? अशेषविशेषगुणवैकल्यम् बुद्ध्यादिविकलम् । सौगतस्य १५ विशेषमाह–सात्मकमिति । कस्येव तद्वैकल्यं नवै ? इत्याह–द्रव्यान्तरवदिति । जीवा(व) द्रव्यादन्यद् द्रव्यं पृथिव्यादि तदन्तरम् तस्येव तद्वत् । यथा निःस्वभावतामयात् न पृथिव्यादेरशेषगुणवैकल्यं तथा जीवस्यापि । अनेन [11]परस्य तद्वैकल्य(ल्ये) दृष्टान्ताभावमाह । तथा नवै निर्वाण(णं) क्षिप्य । कथम्भूतम् ? इत्याह–दर्शनेत्यादि । किंभूतं तर्हि तद्भवन्तः कथयन्ति ? इत्याह–किं तर्हि इत्यादि । किं तर्हि किन्तु जीवस्य स्वस्वभावस्य आत्मलाभं निर्वाणं [11]क्षिप्यः ।

---

(१) तुलना–"तस्मादनादिसन्तानतुल्यजातीयबीजिकाम् । उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः ॥" –प्रमाणवा २।२५६ । 'तत्र निरवशेषस्याविद्यारागादिक्लेशगणस्य प्रहाणात् सोपधिशेषं निर्वाणमिष्यते । तत्रोपधीयते अस्मिन्नात्मस्नेह इत्युपधिः । उपधिशब्देन आत्मप्रज्ञप्तिनिमित्ताः पञ्चोपादानस्कन्धा उच्यन्ते । शिष्यते इति शेषः । सह उपधिशेषेण वर्तते इति सोपधिशेषं । किं तन्निर्वाणम् ? तत्र स्कन्धमात्रमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्येण । तत्सोपधिशेषं निर्वाणम् । यत्र तु निर्वाणे स्कन्धमात्रमपि नास्ति तन्निरुपधिशेषं निर्वाणम् । निर्गत उपधिशेषोऽस्मिन्निति कृत्वा निहताशेषचौरगणस्य ग्राममात्रस्यापि विनाशसाधर्म्येण । तदेव चाधिकृत्योच्यते–"सर्वक्षयेन कायेन वेदनामप्यवासयत् । प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः ॥"–माध्य वृ पृ ५१९–२ । (२) "नवानामात्मगुणानामत्यन्तोच्छित्तिर्मोक्षः ।"–प्रश व्यो पृ २९८ । "यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः । तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते ॥ ननु तस्यामवस्थायां कीदृगात्मावशिष्यते । स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ।" –न्यायम पृ ५०८ । प्रश कन्द पृ २८ । प्रश किर पृ ६ । (३) तुलना–"तस्मात्तत्संयोगाद् अचेतनं चेतनावदिव लिङ्गम् ... स मोक्षः, सा तु दृष्टा स्वरूपोपलब्धिः सोऽपवर्गः ।" –योगभा २।२५ । (४) द्रव्यकर्माभाव । (५) कर्मकलापाभावकर्माभावे । (६) जीवस्य । (७) जीवस्य । (८) मोक्षम् । (९) मूर्खः । (१०) वैशेषिकस्य । (११) "विगतवासनमेव महत्तममप्रार्थ्यं विशेषमयाद्भुतम् । ... विमलं भजन्ति पुर्णकृताः ॥" –रत्न श्लो ७ । सर्वार्थसि पृ ३ ॥

कुतः ? इत्याह–मलेत्यादि । कस्य वा[1] ? इत्याह–मणीत्यादि । तदनभ्युपगमे दूषणभावान्यथे (दूषणमाह–अन्यथा इ)त्यादि । निर्वाणस्यास्याभावप्रकारेण अन्यथा मोक्षार्थिनां व्यर्थः प्रयासः । सभावस्य (अभावस्य) नाशयितुमशक्तेः प्रयोजनाभावान्न इति भावः । एवं जीवस्य आत्मलाभ-लक्षणो(णे) मोक्षे सति यज्जातं [३८५क] परस्य तद्दर्शयन्नाह–तथा सतीत्यादि । तथा तेन प्रकारेण सति जीवस्य आत्मलाभलक्षणे मोक्षे नेश्वरो बुद्धिमान् अशेषविशेषगुणवैकल्यरूपस्य ५ मोक्षस्या नभि(स्याभि)धानात्, न करण (कण)भक्षादिः[2] बुद्धिमान् तदर्थं[3] तद्वचनात्[4] प्रवृत्तेः । एतदेव दर्शयन्नाह–परस्परेत्यादि । स्वात्मन्यवस्थानम आत्मनोऽशेषगुणवैकल्येन, तस्मिन्[5] सति तदभावापत्तेः[6] विरुद्धं तदपि[7] तस्य तत्रावस्थानेन[8], तस्याभिधानात्[9] । निदर्शनमाह–बुद्धेन तुल्यं वर्त्तते इति बुद्धवत् ।

बुद्धस्याऽबुद्धिमत्त्वं दर्शयन्नाह–तत्त्वमित्यादि । १०

> [तत्त्वं शून्यं पदार्थानां येषां ते निरात्मनः ।
> निर्वाणं किं विशिष्येत तदर्थञ्च तपश्चरेत् ॥२०॥

पञ्च[स्कन्ध]अपुनर्भवलक्षणं निर्वाणं स्वरसतः सिद्धं यदर्थं तपस्तपेत् । सन्तानस्य असंस्कृतत्वादसत्त्वात् । चरमचित्तस्य अकिञ्चित्करत्वेन अवस्तुत्वे तद्धेतुपरम्पराया अपि तथाऽभावात् । द्रव्यसन्तानानां स्वहेतुफलप्रवृत्तिरेव लक्षणं परस्परप्रत्ययात्मकत्वात् । १५ कथमन्यथा 'यस्मिन् सत्येव यद्भाव एव विकारे च विकारः तत् कार्यमितरत् कारणम्' इति लक्षण व्यवतिष्ठेत ? न चापरमन्योऽन्यप्रत्यक्षलक्षणम् । यदि पुनश्चिन्तामयीमेव प्रज्ञामनुशीलयतां विभ्रमविवेकनिर्मलमनःप्राप्तिः निर्वाणम्; तदपि मिथ्याभावनायां न संभवति [कामशोकभयोन्मादादिवत्] नैरात्म्यम् ]

ते तव । कस्य ते ? इत्याह–**निरात्मनः** सौत्रान्तिकादिमनवतो([10]मतवतः) बुद्धस्य २० इत्यर्थः । ये **पदार्थाः** रूपादयः पञ्चस्कन्धः (न्धाः), बहिरर्थशून्याः विज्ञानसन्तानाः, सकलशून्यता वेति **तेषां तत्त्वं** स्वरूपं **शून्यं** निःस्वभाव निरूपितविधिना तत्तत्त्वस्य घटनायोगात् । तथा सति [किम् ? इ] त्याह–संसार (रात) **किम्विष्येत (किं विशिष्येत) निर्वाणं** तेनैव भिमततरयोः (अभिमतेतरयोः) अविशेष इति यावत् । दूषणान्तरमाह–**तदर्थम्** । किम् ? **तपः चरेत्ते**[11] जनः । च शब्दो दूषणसमुच्चये । २५

[कारि]कार्थं दर्शयन्नाह–**पञ्चेत्यादि** । **निर्वाणं सिद्धम्** । किं रूपमपि (पम् ? इ)त्याह–[अ]**पुनर्भवलक्षणम्** । कुतः ? इत्याह–**स्वरस्व(स)तः** । कारणमन्तरेण कस्यचिदभावे पुनर्भवाभावादिति भावः । **यदर्थ(र्थं)** यस्य निर्वाणस्य निमित्त(त्तं) यस्तस्येत (**तपस्तपेत्**)

---

(१) वा इवार्थे । (२) कणाद-अक्षपादादय । (३) मोक्षार्थम् । (४) ईश्वरवचनात् । (५) अशेषगुणवैकल्ये सति । (६) स्वात्मन्यवस्थानस्य अभाव स्यात् । (७) अशेषगुणवैकल्यम् । (८) स्वात्मन्यवस्थानेन । (९) विरुद्धमिति । (१०) मतवादिन । (११) ते तव ।

वस्तुत एव सिद्धम्। सन्तानक्षयार्थं तपस्तप्यत इत्येवं चेत् अत्राह–[सन्ता]नेत्यादि। असंस्कृत स्यात् सेन्द्रियेभ्यो भिन्नस्याभिन्नस्य वा सन्तानस्य स्या (नस्माऽ)सत्त्वात्, अतः तत्क्षयार्थो यत्नः किंशुकरागपरिष्वङ्ग एव इति भावः। इतश्च न तत्क्षयार्थो यत्न इति [१८५ख] दर्शयन्नाह–परमेत्यादि। यस्य न कदाचिदपरं सजातीयं चित्तं भविष्यति तच्चरमचित्त [च] स्या-
५ किञ्चित्करत्वेनानर्थक्रियाकारित्वेन अवस्तुत्वे सति तद्धेतुपरम्पराया अपि तथा तेन अवस्तुत्व प्रकारेण अभावात्(त्) सन्तानक्षयार्थं तपस्तप्यत इति। ततो विजाती(य)योगिज्ञाना-(न)भावादयोग इति चेत् अत्राह–स्वेत्यादि। स्व च (स्वं च तत्) हेतुफलं च स्वोपादानापादेय इत्यर्थः, ताभ्यां प्रवृत्तिः। केषाम्? इत्याह–द्रव्यसन्तानानां गुणपर्यायवन्ति द्रव्याणि, तत्सन्तानानां द्रव्याणां च तत्प्रवृत्तिरेव तत्पर्यायतयैव दर्शनात्। न च यस्य यत्स्वरूपं
१० तदभावे भवति स्वप्नेऽन्याभावे ज्ञानवत्। ततो यथा ज्ञानात् तत्संवेदनसिद्धिः तथा द्रव्यात् तत्प्रवृत्तिसिद्धिः इत्यस्य पुनर्दर्शनार्थं द्रव्यग्रहणम्। इतश्च तत्प्रवृत्तिरेव तेषाम्, इत्याह–परस्परे त्यादि। परस्परमन्योन्यं प्रत्ययः कारणं भावप्रधानोऽयं निर्देशः, स एव आत्मा स्वभावो येषां तेषां भावात् तत्त्वात् तेषां प्रवृत्तिरेव। एवं मन्यते–यथा योगिनोऽन्यस्य वा ज्ञानचित्तं सह कारिकारणम् अन्यथा विषयत्वायोगात्, तथा सचित (स्वचि)त्तस्यापि चाक्षुषो वा, अन्यथा
१५ रूपस्य रसं प्रति सहकारित्वेऽपि न रसस्य रूपं प्रति तद् इति *"एकसामग्र्य (सामग्र्य)-धीनस्य" [प्र० वा० ३।८] इत्यादि व्याहतं। तथा सति उपादानसहकारिप्रत्ययसान्निध्य (सान्निध्ये) विजातीयवत् अन्यथापि(पि) कार्यं(र्यं) केन वार्यते?

एतेन चरम(चरम)स्योपादानशक्तिवैकल्यं निरस्तम्, अन्यत्रापि प्रसङ्गात्। अथापि स्यात् [१८६क] सजातीयानुसन्ता (नुकम्पात्) तस्य तृष्णापि कारणम् इति "तदनु[कम्पा]
२० भावादननुसन्धानं" [नः]। तदुक्तम्–

*"दुःखे विपर्यासमतिः तृष्णा वा बन्धकारिणम् (कारणम्)।
प्राणिनो यस्य ते न स्तो न स बन्धाधिगच्छति ॥" [प्र० वा० ३।८३]

इति चेत्, न तत्कर्मस्य हीनस्थानानु सत्त्वा (नानुकम्पसन्ता)नस्य तदभावेऽभावात् न चित्तमात्रस्यत्स्वात्स्कार्यत्वा हि (त्रस्यातत्कार्यत्वात् चि)तृष्णेऽपि ध्यानिनि भावात्।

२५ अथ मतम्–दुःखाख्यानां महाप (महाक)रुणावशात् भवव्यवस्था न (भवावस्थानम्) तदुक्तम्–*"तिष्ठन्त्येव पराधीना येषां तु महती कृपा।" [प्र० वा० ३।२०१] सन्तानोच्छेदयतां तु

---

(१) उत्पादादिविरहितत्वात् असत्त्वादित्यर्थः। "अर्थ हि भगवता बौधीमानि भिक्षवः संस्कृत असंस्कृतलक्षणानि। संस्कृतस्य भिक्षव उत्पादोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यथात्वमपि इति। न चाविद्यमानस्य भावविषयस्येव चात्पादिलक्षणमस्ति।"–भाष्य पृ० १०५। (२) तदेभ्यः। (३) सन्तानक्षयार्थः। (४) युक्तम्। (५) हेतुफलभावप्रवृत्तिरेव। (६) कारणम्। (७) अतस्तरसं प्रति। (८) रूपाद्याश्च अभ्यन्तरम्। (९) 'रूपादे रसतो गतिः। हेतुधर्मानुमानेन धूमेन्धनविकारवत्' इति शेषः। (१०) तृष्णानुकम्पाभावात्। (११) न अनुकम्पातः अननुसन्धानं, यस्मात् सन्तानाभाव इत्यर्थः।

[1]तद्भावात् सदानवस्थायित्वमिति, तदयुक्तम्, अचेतनवत्तदभावेऽपि स्वहेतोरेव प्रबन्धाऽनिवृत्तेः। तत[:] स्थितम्–'**परस्परप्रत्ययात्मकत्वात्**' इति।

स्यादेतत् चरमचित्तस्योभयशक्तियोगेऽपि [2]परत्र बहुलं तथा दर्शनात्तदनुरूपं या[वद्]-दृष्टकल्पनं युक्तम्, अन्यथा ज्ञानमनवयवेन स्वावभासि कथं सिध्येत्? बा[ध]कमन्यत्रापि दर्शितम् 'रसाद् रूपप्रतिपत्तिर्न स्यात्' इति। विजातीयवत् सजातीय कार्यं स्वयमेव न जायत इति कथमुच्यते–'**स्वहेतुफलप्रवृत्तिरेव द्रव्यसन्ता[ना]नाम्**' इति? तत्राह–**कथमन्यथा** इत्यादि। तत्प्रभवे(भवा)कारेणान्यथा **यस्मिन्** कारणाभिमते **सत्येव** नासति **यद्भावो** यस्य कार्याभिमतस्य भावः उत्पाद **एव** इत्यवधारणीयम् **विकारे च** यस्य विकृतौ च **विकारो 'यद्वि-कारः'** इति द्रष्टव्यम्, इदम् उपादेयस्य, पूर्वं कार्यमात्रस्य लक्ष[णम] **तत्तस्य कार्यं** तथेतरत् **कारणम्** इति च द्रष्टव्यम् इत्येव **लक्षण[णं] कार्यकारणयोः कथं न कथञ्चिद् व्यवतिष्ठेत?** यथैव हि [३८६ख] चरमचित्ताभिमते समर्थेऽपि स्वयमेव न भवति[4], तथा अस्मिन् सत्यपि स्वयमेव भविष्यति, यथा [5]सभागमकुर्वतोऽपि [6]विसभागकरणम् तथा विसभागमकुर्वतोऽपि अन्यकरणमिति न सामग्रीजन्यता कार्यस्य, कदाचिदुभयं वा स्वयमेव न भविष्यति, इति कार्य-मकुर्वतोऽपि चरमस्य सत्त्वे नित्यस्यापि तमिति ([7]तदिति) भावः।

यदि मतम्–उपादानेन सहकारिकारणस्ते (णस्य तेन वोपा)दानस्यातिशयापादनं न सह-कारित्वम् अपि तु सर्वेषाम् एकत्र कार्ये व्यापारः, स चरमस्यापि न विरुध्यते इति, तत्राह–**नचेत्यादि। नचापरम्** उक्तादन्यत् **अन्योऽन्यप्रत्ययलक्षणं** किन्तु एतदेव। न हि सदा स्वं[8] नित्यस्य समर्थस्य परापेक्षा इत्युक्तम्। एतेन अन्त्यशब्दस्य कक्रालीयानारंभे(सजातीयानारम्भे) सत्त्वं निरशंसन्ना (निरंशसत्ता)सम्बन्धोऽपि चिन्तितः।

ननु मा भूत् चित्तसन्ताननिवृत्तिर्निर्वाणम्, आस्रववि(नि)रोधो निरास्रवचित्तोत्पत्तिः [9]तत् स्यात्, एतदेव दर्शयति दूषयितु **यदि** इत्यादिना। **यदि पुनः विभ्रमविवेकनिर्मलमन-[:] प्राप्तिर्निर्वाणम्**[10]। किं कुर्वताम? इत्याह–**चिन्तामयीमेव**[11] अनित्यत्वाद्यनुमानरूपामेव नान्या **प्रज्ञां** बुद्धिम् **अनुशीलयताम्** अभ्यस्यताम् इति। तत्र दूषणमाह–**तच्चेत्यादि। तदपि निर्वाणं न संभवति** इत्युक्तम्। कथम्? **अतत्त्वभावनेत्यादिना**। कस्मिन् सति तन्न संभवति? इत्याह–

---

(१) महाकरुणाऽभावात्। (२) दीपादौ। (३) "सत्येव यस्मिन् यज्जन्म विकारे चापि विक्रिया। तत्तस्य कारण प्राहु "–प्र० वा० १।१८२। (४) कार्यम्। (५) सजातीयम्। (६) विजातीय। (७) सत्त्वमिति। (८) 'स्व' इति निरर्थकम्। (९) निर्वाणम्। (१०) "कार्यकारणभूताश्च तत्राविद्यादयो मता। बन्धस्तद्विगमादिष्टो मुक्तिर्निर्मलता धिय॥ यथोक्तम्–चित्तमेव हि ससारो रागादिक्लेशवासितम्। तदेव तैर्विनिर्मुक्त भवान्त इति कथ्यते॥"–तत्त्वस० प० पृ० १८४। (११) वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते। धिय श्रुतादिप्रभवा नामोभयार्थगोचरा॥५॥ श्रुतादिभ्य प्रज्ञा प्रभवति (जायते) तत्र श्रुतमयी प्रज्ञा नामार्थम्, चिन्तामयी उभयस्य नाम्नोऽर्थस्य च कृते। भावनामयी प्रज्ञा केवलमर्थस्य कृत इति वैभा-षिका। सौत्रान्तिका (वसुबन्धु) श्रुतमयी प्रज्ञा हि आप्तप्रमाणजो निश्चय, चिन्तामयी प्रज्ञा युक्तिनिध्यान (युक्त्या नितीरण)जो निश्चय, समाधिजो निश्चय भावनामयी प्रज्ञा।"–अभिध० को० टी० पृ० १६१।

मिथ्याभावनायां मिथ्या परस्यं सर्वस्यम् (सर्वस्य क्षणिकत्वात्) ज्ञानं तस्य भावनायां सत्यम्। नहि मिथ्याभ्या[भ्या]भ्यासात् तत्त्वज्ञानं कामशोकभयोन्मादादिवत् ।

अपर आह–यथा आत्मन्यनैकान्तेऽपि[1] 'चैत[न]योऽहम्' [१८७क] इति, [2]मिथ्याभावनायामपि विषापहारः तथा प्रकृतायामपि दोषापहार इति चेत्; न; आत्मादिभावनायामपि
५ तत्प्रसङ्गा[त्], निदर्शनस्य चोभयत्र समानत्वात् । वस्तुप्रतिबन्धात् मिथ्यात्वेऽपि न दोषः' इत्यपि न यु[क्तम्, त]त्त्वेतरत्वा[त्] तद्भावादिति । 'तन्निर्वाणमुपपन्नं न तत्कारणम्' इत्यनेन दर्शयति । स्वयं च निर्वि(र्वी)षीकरणप्रक्रमेन दीक्ष(क्षा)या निर्वाणहेतुत्वं साधयन्तं निराकर्तुं विषापहारनिदर्शनेन मिथ्याभावनया[3] तत्साधयति इत्यनुक्तकारी ।

ननु मिथ्यात्वाविशेषेऽपि *"सर्वं दुःखमनित्यम्" इत्याद्युक्तेः विषयेषु वैराग्यम्
१० *"तपस्यसूत्रच्छिद्र(छिद्र)वत्" इत्युक्ते[ः] *"नात्मापि (हि) तत्त्वम्" इत्युक्ते[श्च] । तथा नैव स्वभावनैव मुक्त्यङ्गमिति चेत्, अत्राह–[वैराग्य]मित्यादि । अत्रायमभिप्रायः–आत्मैकोऽना[दि]निधन(न)ज्ञानस्वभावः, तस्य आगन्तुका रागादयः, सची(ती) रागवद्देषेत्युक्तेऽपि तत्र तत्त्वविदो वैराग्यसंभवात्, यथा कस्यचित् महाकुलस्य (महाकुलोत्पन्नस्य) कुरूपिण्याः कन्याया प्रवृत्तस्य पुनः कुलशीलादिदर्शने तत्र वैराग्यम्, अतत्त्वविदो मूत्रच्छिद्रम् इत्युक्तेऽपि न तत्र तद् ।
१५ गर्दभादि(गर्दभ्या दि)रागितच्छिद्रदर्शनेऽपि [11]तस्य तत्र प्रवृत्तिदर्शनात्, [12]विपरीतस्य [13]कथमित्युक्तेऽपि [14]तदिति । [15]चेदिति ।

यदि वा, मदीये पक्षे मिथ्याभावनायां निर्वाणं न संभवति आत्मवादिमते तु यथार्थमनुध्यानमपि[15] । तथाहि–

*"यः पश्यता(त्या)त्मानं तत्रास्याहमिति शाश्वतस्नेहः ।
२० स्नेहात् सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥"
[प्र० वा० १। २१९]

इति चेत्, अत्राह–चेतनोऽहम् इत्यादि ।

[ चेतनोऽहं मम ज्ञानं स्वरूपं कर्मणाऽरिणा ।
तद्वैकल्यमितीहेत कैवल्यार्थमुपायतः ॥२१॥

---

(१) चैतन्यस्य । (२) गतभिन्नेऽपि । (३) मद्भोऽहम् । (४) "कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः । अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥"–प्र० वा० ३।२८२। (५) अनुमानस्य परम्परया वस्तुप्राप्तेः । (६) "इदानीं नास्ति सामर्थ्यं दीक्षादीनामसम्मते । यदि स्यान्मरणापूर्वमिति नास्ति प्रमेयसौ ॥...मिथ्यासिद्धसमायुक्तौ मतिकर्मसाधकः ॥२६ ॥ दोषाः स्वबीजसन्ताना दीक्षितेऽप्यविकारिता ।"–प्र० वा० प्र० वार्त्तिकाल० पृ० ३१ । ( ) "तस्मात् भूतमभूतं वा यद् यदेवाभिभाव्यते । भावनापरिनिष्पत्तौ तत् स्फुटाकल्पधीफलम् ॥"–प्र० वा० ३।२८५ । (८) वाचते । (९) वैराग्यम् । (१ ) अतत्त्वविदः । (११) रागजस्य । (१२) चेतमन्यम् । (१३) वैराग्यम् । (१४) 'तदिति' निर्देशमात्रम् । (१५) 'न संभवति' इति सम्बन्धः ।

आ[त्मा]त्मीयतत्त्वमजानन्नेव कः दुःख[पीडितोऽपि] हिताहितप्राप्तिपरिहारयोः प्रवर्तेत मत्तवत् ? यदा पुनः कुतश्चित् अनन्तज्ञानादिकं चैतन्यमात्मतत्त्वं तत्त्वज्ञानेन च तदुपेयं मिथ्यात्वादि कर्म हेयं प्रतिपद्येत तदा आत्मानं परं वा निर्व्याधितं कर्तुकाम इव निसर्गात् तदुपायेऽभियुज्येत नान्यथा। एकान्तपक्षे स्वपरश्रेयःप्राप्तेरत्यन्तमसंभवात् ।] ५

**चेतनः** स्वयं(स्व)परज्ञोऽहम् । कुतः ? इत्यत्राह–**मम ज्ञानं स्वरूपं** यतः अन्यथा [३८७ख] घटादिवत्तदयोगात ।

[1]ननु ज्ञानसम्बन्धाच्चेतनो न ज्ञानस्य [2]तत्स्वरूपत्वादिति चेत् , [3]सम्बन्धे तस्य प्राक्तनार्थतन (प्राक्तनाचेतन)रूपपरित्यागे अनर्थकं तत्सम्बन्धकल्पनम् , तत्स्वरूपत एत (पत्यागत) एव चेतनोपपत्तेः । [4]तदपरित्यागे न चेतन[ः] स्यात , तद्वाँस्तु भवेत् । नहि दण्डसम्बन्धाद् देवदत्तो दण्डो भवति । 'धनुः प्रविशति' इत्यादिवत[5] स्यादिति चेत , न, उपचारमात्रं दृढप्रत्ययवर्जितं भवैव (भवेत्) । कथ च भिन्न(न्नं)ज्ञानं [तस्य] ? सम्बन्ध(न्धा)सिद्धिः(द्धेः) । तदुपचाराच्चेत् , सोऽपि कुतः ? तत्सम्बन्धात[6] , अन्योऽन्यसंश्रयः । १०

किञ्च, ज्ञानस्यापि स्वग्रहणविक[ल]स्य कुतश्चेतनता, यतोस्योपि (यतोऽन्योऽपि) तत्सम्बन्धाच्चेतनः स्यात् । अर्थग्रहणादिति चेत् , न , स्वग्रहणाभावे [7]तदयोगात् । स्वपरप्रकाशनं वरमात्मन एव कल्पितं किमपरेण ज्ञानेन ? ततः स्थितम्–'**मम ज्ञानं स्वरूपम्**' इति । १५

[8]सर्वस्य सर्वदर्शित्वं चेत् , अत्राह–**कर्मणा** [इ]त्यादि । **कर्मणा** । किम्(म्भू)तेन ? **अरिणा** तत्स्वरूपनाशकत्वाद् वैरिणा । **तद्विकल्पं** (**तद्वैकल्यम्** )तस्य ज्ञानस्वरूपस्याऽसम्पूर्णत्वम् नियतप्रकाशनरूप**मिति** हेतोः **कैवल्यार्थं** केवलस्य कर्मविकलस्य आत्मनो भावः कैवल्यं तदर्थम् । **उपायतः** सम्यग्दर्शनादिकमुपादाय (मुपाय)माश्रित्य **ईहेत** यतेत । को हि नाम ज्ञानवा[न् आ]त्मनो वैरिणं सोपायविलयं वीक्ष्य(क्ष)माणोऽपि उपेक्षते तत्कृतागन्तुकसुखलेशपाशवशात् । २०

कारिकां व्याख्यातुमाह–**आत्मे**त्यादि । अत्रायमभिप्रायः–अतत्त्वज्ञो वाऽऽत्मदर्शी तदर्थं न प्रवर्त्तेत, तत्त्वज्ञो वा ? त[त्र] प्रथमपक्षे सिद्धसाधनमित्याह–**कोनन्नेव** (**कोऽजानन्नेव**) **प्रवर्त्तेत** ? किम् ? इत्याह–**आत्मीयतत्त्वम्** [३८८ क] अनन्तज्ञानादिकं यावद्द्रव्यभावित्वादिति निरूपयिष्यते, न शरीरादिकं[9] तत्प्रभव वा सुखादिक विपर्ययात्[10] परतन्त्रत्वाच्च[11] । के (क्वे)त्याह–**हिते**त्यादि । हितं निर्वाणं तत्साधनं च अहितः संसारः तद्धेतुश्च तयोर्याथासङ्ख्येन **प्राप्तिश्च परिहारश्च** तयोरिति । क इव ? इत्याह–**मत्ते**त्यादि । २५

ननु दुःखानुभवे तदजानन्नपि तत्र प्रवर्त्तेत इति चेत् , अत्राह–**दुःखे**त्यादि । नहि

(१) नैयायिक प्राह । (२) आत्मस्वरूपत्वात् । (३) ज्ञानसमवाये । (४) अचेतनस्वरूपापरित्यागे । (५) उपचारात् । (६) चेत् , । (७) अर्थग्रहणायोगात् । (८) तथा सति । (९) आत्मीयं तत्त्वम् । (१०) यावदात्मद्रव्यं तावत् शरीरादिक न भवति । (११) इन्द्रियाद्याश्रितत्वात् ।

बुभुक्षापीडितोऽपि बालकः अशनं (भोजनं) तदुपायं च जानन् तत्र प्रवर्तते । द्वितीयपक्षे आत्मदर्शी तदर्थं प्रवर्तते, इत्याह–यदा [इत्यादि] । पुनरिति पक्षान्तरद्योतने, कुतश्चित् अनुमानादिप्रमाणा[त्] प्रतिपद्येत पुरुषः । किम् ? इत्याह–आत्मतत्त्वं जीवस्वरूपम् । किं तत् ? इत्याह–चैतन्यम् ।

५ ननु चेत् तथा प्रतिपद्यते सर्वोऽपि, इति स तदर्थं प्रवर्तेत इति चेत् अत्राह–अनन्त ज्ञान इत्यादि । चैतन्यविशेषणम् अन्यत् । तत्किम् ? इत्याह–उपेयम् । तथा यदि पुनः प्रतिपद्येत, किम् ? इत्याह–कर्म । किंभूतम् ? हेयम् । केन ? इत्याह–तत्त्वज्ञान इत्यादि । यथा च 'तत्त्वे च'[1] तथा प्रतिपादयिष्यते । पुनरपि किंभूतं तत् ? इत्याह–मिथ्येत्यादि । तत्कर्म तदात्मा क्रिया (तदात्मा अनित्यत्वादिकं) तदुपयुक्तमविरोधवत् । तत्र कुतश्चिदिति । तत्कुतो
१० जायते ? इत्याह–निसर्गादितया (निसर्गादित्यादि, तदा) तदुपाये निर्मोक्षोपाये अभियुज्येत (अभियुज्येत) । क इव ? इत्याह–आत्मानमित्यादि । [आत्मानं] स्वं परं वा निर्व्याधितं कर्तुकाम इव, वैद्य इव इत्यर्थः । यथा आत्मानं पश्यन्नपि वैद्यः तत्त्वदर्शी स्वस्य परस्य वाधायां (वा बाधायोगे) ज्ञात्वार्थं तदुपाये यमनादौ (शमनादौ) तदा(च)धिकं सुखं मन्यमानः प्रवर्तते तथा मुमुक्षुरपि पुरुष इति, अन्यथा (नान्यथा) नापरेण प्रकारेण तत्राभियुज्येत
१५ [१८८ख] । कुतः ? इत्याह–एकान्तपक्षे [नित्यैकान्तपक्षे] क्षणिकैकान्तपक्षे च स्वपरयोः श्रेयसो मुक्तेः प्राप्तेरत्यन्तमसंभवात् ।

एतदपि कुतः ? इत्याह–चित्तेत्यादि ।

[ चित्तस्वपरसन्तानभेदाभेदाव्यवस्थितेः ।
मैत्र्यादिर्विनियोगेन क्रियासङ्करघातिनाम् ॥२२॥

२० स्वसंवेदनमेव लक्षणं चित्तस्य, अन्यथा सर्वचित्तचैतानामात्मसंवेदनं नोपपद्यते । न चैकान्तस्वसंवित्तिश्चित्तस्य भ्रान्तेरभावप्रसङ्गात् । यथादर्शनम् अनेकान्तात्मकत्वात्, यथाकृतं तत्त्वस्य स्वतः प्रतिपत्तेः । परतश्च न संभवत्येवाधिगतिः, ज्ञानान्तरस्य अतद्विषयत्वात् अनन्यवेद्यनियमात् अनेकान्तरूपस्यापि ग्रहणाविरोधात् । तत्र स्वपर चित्तव्यवस्था । विषयाकारविवेकस्य स्वतोऽन्योन्यस्य परस्य प्रसङ्गात् । परचित्तस्यापि
२५ सहोपलम्भादिभिः स्वस्वभावापत्तेः । चित्तानां कुतः सन्ततिः कार्यं 'स्वपर[2] यस्मिन् सति'[3] खरविषाणवत् । न च सतो नैरन्तर्यम् । कार्यं तथा चात्यन्तमसतः कार्यत्वं प्रतिषिद्धं वेदितव्यम् । कथं पुनः सतः कार्यत्वं कृतत्वात् कारणवदिति ? एकान्तानङ्गीकरणादनुक्तमाचरसि । यथैव तर्हि सत्कार्यं तथैव नोत्पत्तुमर्हति निष्पन्नत्वात्, यथा चासत् तथा च अत्यन्तमसंभवात् खपुष्पवत् इति । तच्चेदं कुतोत्तरम् । न कश्चिदेकान्त
३ दर्शनं यदवलम्ब्य अनेकान्तसिद्धिः संशयादिना उपालभ्येत । तदपह्नवे क कस्य करणादयः ? स्वपरसन्तानभेदानुपलब्धौ तत्त्वभेदाभावात् । सत्यां च स्वपरसन्तान

(१) चैतन्यम् । (२) चैतन्य-ज्ञानी । (३) 'च' इति व्यर्थम् ।

यदे (यद्ये)कान्तवादिनां परोक्षविषयसम्पर्कः भवति तदा तत्पूर्विका श्रुतिरपि तद्विषयं स्यान्नान्यथा, न चैवमिति ।

मीमांसक आह– स्वत एव परोक्षश्रुतिः प्रमाणं न तत्सत्यक्षापेक्षा । तदुक्तम्–[४०१क]

*"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
५ न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥"

[मी० श्लो० सू० २ श्लो० ४७] इति,

तत्राह–नाप्यस्ये (नाप्यनये)त्यादि ।

[नाप्यनया मार्गप्रतिपत्तिः यामाश्रित्य श्रुतेः स्मृतः ।
मन्त्र नित्यं प्राकृताः प्रतिपद्येरन् तदर्थकम् ॥२८॥

१० नित्यस्यानेकार्थसंभवात् न तस्मादर्थं प्रतिपत्तुमर्हति, कथमन्यथा विप्रतिपत्तिः स्यात् । यदि पुन रागादिरहितस्य कस्यचिदुपलब्धियतो वेदार्थप्रतिपत्तिः स्यात् । रागादिमत्त्वेऽपि यदि कश्चिद् विवक्षिततदर्थतत्त्वं जानीयात् ब्रूयाद्वा किं तेन ? न ब्रूमः रागादिमत्त्वात् अपि तु परोपदेशापेक्षीति; क्व पुनः तदर्थदर्शिनः परः सः यस्योपदेशमुपचयाद्य प्रमाणयन्तः कपिलादीन तिशेरते ? तदनेकार्थसंभवात् १५ कुतस्तत्त्वमिदन्तया नेदन्तया वा व्यवस्थापयेत् यतः पौरुषेयाद् विशेष्येत । ]

शब्दात् अर्थगतिनिगमप्राप्तिहेतुत्वात् मार्ग इव मार्गः शब्दार्थसम्बन्धो वाच्यवाचकरूपः तस्य प्रतिपत्तिः नापि भवतु । केन ? अन्य[य]परम्परैकान्तेनानया इत्यत्वा (त्वेनास्या) जैमिन्यादयः शब्दार्थसम्बन्धनित्यत्ववादिनः परे चैकान्तः (परम्परैकान्तः) तेन, न झाम्येता (प्रज्ञेता) परोक्षो (परान्) मार्गो प्रतिपद्यते । किंभूता सा नापी(सी)त्याह–यस्या (?)

२० यामाश्रित्य श्रुतेः वेदात् सकाशात्कर्म(कृति)मायास्तत्त्वप्रतिपत्तिः स्यादित्याम्नायात् । कुतः यामाश्रित्ये (माश्रित्ये)त्याह–स्मृतेः । एतदुक्तं भवति–पूर्वं साक्षात् शब्दार्थसम्बन्धदर्शनः (र्शिनः) सम्बन्धप्रतिपत्तिः परस्य पुनः शब्दश्रवणात् तत्प्रतिपत्तिः, न चैवमिति । यदि वा स्वर्गापवर्गयोर्मार्गो यागादिः तस्य प्रतिपत्तिः नापीति व्याख्येयम् । शेषं पूर्ववदिति । माभूत् तेन तत्प्रतिपत्तिः, श्रुतेरेव तु तत्त्वप्रतिपत्तिः स्यादिति चेत् अत्राह–मन्त्रमित्यादि ।

२५ मन्त्र (न्त्रं) पूजायागादनवाक्यं स्वर्गोनिधानसमर्थं प्रतिपद्येरन् तत्त्वथा जानीयुः । के ? इत्याह–प्राकृताः शास्त्रमेवो जैमिन्यादि कं (रिवत्) । तथा च तद्वत्तेऽपि तदर्थानुष्ठायिनः स्युः इति मन्यते ।

जैमिन्यादय एव तत्प्रतिपद्यन्ते नान्यदिति (नान्य इति) चेत् अत्राह–नित्यमिति । अयमभिप्रायः–यदा नित्यः सर्वगतो मन्त्रः पुरुषनिरपेक्षः स्वमर्थं प्रतिपादयति तदा सर्वत्र तत्र

३० विशेषात् शम्भ्राऽपि (शूद्रोऽपि) प्र[ति]पद्येत, न वा कश्चित् । न ह्याकाशमेयं स्याद्यसमन्यं (मेकं प्रत्याकाशम् अन्यं)प्रत्यन्यथा । सा(यथा)सौ द्विजायैव तं प्रतिपादयति । कुत एतत् ? [४ १२ख]

(१) परोक्षविषया । (२) शास्त्रगः ।

स्वभक्तत्वात् । पक्षपातिना किं तेन ? परोऽपि तद्भक्तः समुपलभ्यते । अथ तस्यैव आगम एव, तदपि कुतः ? तेन तदर्थानुष्ठानात्, अन्येनापि दृश्यते । विप्रोपदेशात्, किन्तेन, यदि मन्त्र एव समर्थं (तमर्थं) कथयति ।

एतेन [1]तेन पाठात्तस्येति[2] निरस्तम् ।

यदि पुनः द्विजाराधनातः तं प्रत्येव तत्प्रतिपादनसमर्थो जातः, कथं नित्यः ? ५

किं च, तदाराधनाक्रमो यदि मन्त्रार्थः, सोऽपि ततोऽन्येनापि प्रतीयते । नो चेत्, पुरुषकल्पितो नाभिमतफलदायी स्यान अन्यथा किं मन्त्रेण ? 'अथ विप्र एव तद्ग्रहणानुष्ठाने योग्यः, न चैतावता मन्त्रोऽनित्यः, नित्यानामपि आत्मादीनां कार्यनियमदर्शनात्' इति, तन्न सारम्, यतः स्यादेतदेवं यदि परोपदेशादद्विजस्य तदर्थप्रतिपत्तिर्न स्यात्, अग्नेरिव धूमः, न चैवं ततः तद्दर्शनात् । द्विजस्यापि अपरोपदेशिका न तत्प्रतीतिः । १०

किंच, न ताव[त्] मन्त्रो 'द्विजोऽयम्' इति स्वय ज्ञात्वा तस्मै स्वसमर्थं (स्वस्यार्थं) निवदेयति अचेतनत्वात्, अन्यथा आत्मज्ञानकल्पनावैक(फ)ल्यम् । नापि 'यस्मादहं ब्राह्मणः तस्मादहं मन्त्रार्थं गृह्णामि' इति द्विजो जानाति, ब्राह्मणत्वप्रतिपत्तेः तस्यापि स्वयमसंभवात् । वेत्तित प्रति (निवेदितं) चैतद् वर्णं (वृत्तो) स्वयमेव शास्त्रकृता । ततो **मन्त्रं नित्यं प्राकृता[:]प्रतिपद्येरन्** इति । 'कम्' इति प्रश्ने उ[त्त]रमाह–तदर्थज्ञोऽयं[सम्]प्रदायाद् वृत्तते (वर्तते) मन्त्रार्थज्ञसम्प्रदायो १५ भावप्रकारेण विशेष्यते तदभियत (?) यतः तत्सम्प्रदायमन्तरेण प्राकृताना तत्प्रतिपत्तेः मन्त्रो नित्यः ने नात् (स्यात्) [४०४क] पौरुषेयात्मत्वात् । नहि परोपदेशापेक्षणे तस्य ततो भेदः ।

कारिका विवृण्वन्नाह–**नित्यस्य** इत्यादि । **न तस्माद् नित्याद् वेदात्** इति । कथम् ? इत्याह– **कथ(अर्थ)** मित्यादि । **अन्यथा** अन्येन ततः तस्य तत्प्रति[प्रत्ति]प्रकारेण **कथं विप्रतिपत्तिः स्यात्** [3]प्रतिव्याख्यात्रि(तृ)व्याख्याभेदः स्यात । नहि स्वयमेव नियतं स्वमर्थं निवदेयति[4] वे ते (वेदे) २० नित्ये सति [5]सा युक्ता । अथवा, प्रतिपत्त्यभावो **विप्रतिप्रत्तिः कथं** कस्यचित् **स्यादिति** चेत् ? तदेक एवार्थः ततः प्रतीयत इ[ति]नास्ति सा इति, तत्राह–**अनेक** इत्यादि । वेदस्य पुरुषापेक्षया **अनेकस्य** नियोगादि[6] रूपस्यार्थ**स्य संभवात्** कथ स्यादिति ? अथ, याना (यावा)नर्थो वेदात् प्रतीयते स सर्वोऽपि तस्यैव, अन्यथा न कोऽपि स्यादिति चेत्, अत्राह–**नित्यस्य** इत्यादि । स्वर्गोऽर्थः, तस्य काम्यमानत्वात् *"**स्वर्गकामः**"[7] इति वचना[त्] तस्मै तन्निमित्त तत्त्व २५ (तच्च) यागादि तत् (तम्) **तस्मात् कथं प्रतिपत्तुमर्हति** ? कुतः ? इत्याह–**अनेकार्थसंभवाद्** वेदस्य अनेकार्थोऽर्थतत्त्वम्, अन्यथा 'सारमेयमासभक्षणात् स्वर्गः स्यात्' एकः [8]तस्यार्थ इति चेत, अत्राह–**कथ**मित्यादि । अनेकार्थसभवाभावप्रकारेण **अन्यथा** ।

---

(१) द्विजेन । (२) द्विजस्य । (३) व्याख्यातारं व्याख्यातारप्रति प्रतिव्याख्यातृ । (४) निवेदनकर्तृरि सति । (५) विप्रतिपत्ति । (६) आदिपदेन भावनाविध्यादिपरिग्रह । (७) 'अग्निहोत्र जुहुयात् स्वर्गकाम' इत्यादौ । (८) 'अग्निहोत्र जुहुयात्' इत्यस्य अग्नि हन्तीति अग्निह श्वा, तस्य उग्र मास जुहुयात् खादेत् इत्यर्थ स्यात् । "तेनाग्निहोत्र जुहुयात् स्वर्गकाम इति श्रुतौ । खादेत् श्वमांसमित्येष नार्थ इत्यत्र का प्रमा ॥"–प्र० वा० ३।३१८ ।

तत्राप्यसौ ब्राह्मणः [1]तदनुप्रवेशे तु विपरीतः इति चेत , ननु किं ब्राह्मणत्वं नष्टम् ? तथा चेत , न नित्य सामान्यमिति [2]कर्कमध्यमध्यासीनो मुण्डो न गौः स्यात्। अथ न नष्टम् , तदनुप्रवेशेऽपि[3] ब्राह्मण एव । वेदे भक्त्यभावान्नेति चेत् , किं [4]तद्भक्तिरेव ब्राह्मण्यम् , अन्यद्वा ? प्रथमपक्षे न तत्सामान्यम् ज्ञानविशेषत्वात्तस्याः[5] । तथा च सुप्ताद्यवस्थस्य[6] व्यापादना वधेऽपि (व्यापादनेऽपि) न ब्रह्महत्यादिदोषः । द्वितीयपक्षे [7]तदभावेऽपि तदवस्थं तदिति स एव दोषः । अथ तद्भक्त्या[8] स एव ज्ञाप्यते , न, शूद्रेऽपि तद्भावात्[9]। वेदपाठरहिते[10] सत्यपि[11] सा[12] न ज्ञायत इति [चेत् ,] कुतः तत्र[13] द्विजत्वज्ञानम् ? गोत्रादेरिति चेत , इतरत्र समानम् ।　५

एतेन तदर्थानुष्ठानं प्रत्युक्तम । [४०५ ख] । तथाहि–[14]तदेव द्विजत्वम् , अन्यद्वा सामान्यम् ? तदेव चेत् , तद्रहितः सिसुः(शिशुः)स[15] न भते (भवेत्) । [तथापि तदा][16] तदभ्युपगमे अन्यदापि[17] कुतः तदनुष्ठाना[त्] स्यात् ? अन्योऽपि स्यात्[18]। तस्य तदभावान्नेति [चेत् ,]कुत एतत् ? अद्विजत्वादिति चेत , प्रकृतस्यापि त(न)भवेत् । तदनुष्ठानात् स द्विज इति चेत् , अन्योऽन्यसंश्रयः–द्विजत्वे तदनुष्ठानम् , अतस्तदिति ।　१०

एतेन संस्कारादयोऽपि चिन्तिताः । सामान्यं तद्[19] इति चेत् , [20]तदभावेऽपि [21]तत्तदवस्थमिति [22]नासावब्राह्मण[ः] । तन्न ब्राह्मणगृहीतोऽर्थः वेदस्य । बहुजनगृहीत इति चेत् , न, अनेकोऽपि तद्गृहीत[23] एव समानसभक्षेऽपि (श्वमासभक्षणमपि) बहुजनपरिगृहीतमेव । द्वेषेण तत्कल्पितम् अतो नार्थ इति चेत् , भक्त्या अन्योऽपि[24] द्विजैः कल्पित इति समानम् । ततः स्थितम्– तदनेकार्थ इत्यादि ।　१५

वेदस्य प्रमाणत्वे परोक्तां युक्तिं दूषयितुं दर्शयन्नाह–**वेद** इत्यादि ।

**[वेदः प्रमाणं नित्यत्वात् कर्तुरस्मरणाद्यदि ।**
**स्वशास्त्रकर्तुः स्मर्ता अपलप्येत न किं परैः ॥२९॥**　२०

शब्दस्य अन्यस्य वा परिणामित्वं सिद्धम् इत्युक्तम् । अपरिणामेऽपि नचाक्षरराशेरपौरुषेयत्वं युक्तं येन वेदः स्वतः प्रमाणं स्यात् , शास्त्रान्तरस्यापि तदनुषङ्गात् विशेषाभावाच्च । कर्तुरस्मरणात् व्यभिचार्ययमपि । तावता प्रमाणत्वे शास्त्रान्तरस्यापि प्रमाणत्वं भवेत् न वा श्रुतेः । वर्णानां पदानां च न क्वचित् प्रामाण्यं न भवेत् । सङ्केतात्तदर्थप्रतिपत्तौ प्रकृतवाक्यराशेरितरं प्रति न कश्चिद्विशेषः ? पौरुषेय्या व्यक्त्या च । स्वतः प्रमाणत्वे सङ्केतादर्शिनोऽपि प्रमाणं स्यात् । कर्तुरस्मरणेऽपि प्रबन्धानादित्वं स्यात् । तथापि कथं प्रामाण्यं तद्राशेः म्लेच्छव्यवहारवत् । तन्न अपौरुषेयस्यापि सङ्केतवशात्　२५

(१) सुगतमतानुप्रवेशे । (२) अश्वमध्ये तिष्ठन् मुण्ड । (३) सौगतमतस्वीकारेऽपि । (४) वेदभक्तिरेव । (५) भक्ते । (६) द्विजस्य मारणेऽपि । (७) वेदभक्त्यभावेऽपि । (८) वेदभक्त्या । (९) वेदभक्तिसद्भावात् । (१०) वेदपाठाधिकाररहिते शूद्रे । (११) विद्यमानापि । (१२) भक्ति । (१३) ब्राह्मणे । (१४) वेदार्थानुष्ठानमेव । (१५) द्विज । (१६) अनुष्ठानरहितत्वेऽपि शिशुकाले ब्राह्मणत्वस्वीकारे । (१७) यौवनाद्यवस्थायाम् । (१८) अद्विजोऽपि वेदार्थानुष्ठानात् द्विज स्यात् । (१९) द्विजत्वम् । (२०) वेदार्थानुष्ठानाभावेऽपि । (२१) द्विजत्वम् । (२२) सुगतमतानुसारी । (२३) बहुजनगृहीत एव । (२४) यागादिरूप ।

अर्थप्रतीतौ विश्वासः । सम्प्रदायाविच्छेदोऽपि पौरुषेयस्य विप्रतिपत्तिनिराकरणोपायः स्यात्, तदपदर्शिभिः पुनः पुनः उच्छिन्नस्य उच्छिन्नस्य प्रवर्तनात् ।]

वेदः प्रामाण्य (प्रमाणम्) । कुतः ? इत्याह–नित्यस्यापौरुषेयत्वात् । एव(वं) मन्यते–शब्दे [अ]प्रामाण्य(ण्यं) रागादिकृतं दृष्टं पितृजन्मनि । (कृतं दृष्टम् पितृजन्मनि) ५ रागादयश्च पुरुषाश्रिताः, ततो वेदात् पु[रुषः] निवर्तमानः स्वाश्रयाम् रागादीनादाय निवर्तते । रागादिनिवृत्तौ च तन्निबन्धन(म)प्रामाण्यमपि निवर्तते इत्यौत्सर्गिकं प्रामाण्यमवतिष्ठते । तथाहि–यदनि(न्नि)बन्धनं न तत्तदभावे भवति पावकाभावे धूमवत् । रागादिनिबन्धनं च शब्दे[अ]प्रामाण्यम् । ततो वेदे तदभावान्न भवति । तदुक्तम्–

> *"शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम् ।
> १० तदभावः क्वचित् सिद्धो गुणवद्वक्तृकत्वतः ॥
> वेदे वक्तुरभावात्तु (त्तु) दोषाशङ्कैव (शङ्कैव) नास्ति नः ।" [४ ५८]
> [मी० श्लो० चोदना० श्लो० ६२] इति ।

कुतस्तत्र नित्यत्वमिति चेत् ? अत्राह क[र्तु]रस्मरणात् । तथाहि–अवस्मर्यमाणकर्तृकं तन्नित्यं यथा गगनम् तथा वेदः । यदि शब्दः पराभिप्रायद्योतकः । अत्र दूषणम्–[स्वशा १५ स्त्रकर्तुः] इत्यादि । स्वशास्त्रस्य स्वागता(स्वमता)गमस्य प्रवचनादेर्यः कर्ता जिनादिः तस्य वा स्मर्त्ता(स्मर्त्ता) सोऽपलप्येत न किं परैः अपलप्येतैव जैनादिभिः । इदमत्र तात्पर्यम्–वेदवत् प्रधानस्यापि(प्रवचनस्यापि) तदस्मरणं तेन नित्यत्वमस्तु, तत्रैव वेदेऽपि हिरण्यगर्भादयः स्मर्यन्ते । तदपलापोऽन्यत्रापि इति न वेदेतरयोः विशेषः स्यात् । अन्यथेद् (अन्यथा) वेदेऽपि तन्म्य(स्मर्तव्य)मिति ।

२० [कारि]कायाम् अनुक्तावि(अनुक्तौ) नित्यत्वस्य अविरुद्धतां दर्शयन्नाह–शब्दस्य इत्यादि । वाक्यस्य इत्यर्थः । अन्यस्य सुवर्णादेरिव शब्दस्य अनेकान्तमन्तरेण अतः तत्र नित्युक्तम्, मपूर्वमन्यस्य (?) परिणामित्वं सिद्धम् क मा रि क स्य च [इति] दृष्टान्तः ।

नतु परिणामनित्यत्वं न कूटस्थनित्यत्वम् हेतुः, तस्य च समया(य)सिद्धत्वात्, न्यायसिद्धो

---

(१) व्यभिचारिपुरुषे । (२) रागाद्यभावात् । (३) दोषाभावः । (४) 'यद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात् ।' इति शेषः । (५) "तेन वेदे व्यवहर्तृभिः अवश्यं स्मरणीयः सम्बन्धकर्ता स्यात् व्यवहारस्य च तस्मात् कारणादपरापरक्रमो न कृत्वा सम्बन्धं व्यवहारार्थं केनचित् वेदाः प्रणीता इति 'तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः । –शाबरभा० १।१।५ । बृहती पृ० १०७ । 'यदा प्रत्र-प्रणीतत्वात् कल्पोऽयं प्रतिपादयेत् । न स्वतन्त्रा तदाशक्यं मिश्रो न स्मर्यते कथम् ॥ तस्मादवश्यं स्मर्त-व्यस्य वेदानां सम्बन्धानां च कर्तुरस्मरणात् दोषाद्युपलभ्यमानाभावेऽव्यभिचारित्वे सिद्धं वेदानां सम्बन्धानां च नित्यत्वमित्याह दृढ इति ।"–मी० श्लो० सम्बन्धा० श्लो० ११२ ११ । न्यायरत्ना० । 'कथं पुनरपौरुषेय-त्वं वेदानाम् ? पुरुषस्य कर्तुरस्मरणात् ।"–प्रक० पृ० ९० । "कर्तुरस्मरणाच्चापौरुषेयत्वम्" –शास्त्रदी० पृ० ५५ । तत्त्वबि० पृ० १०१ । "कर्तृस्मृते अध्ययनात् दोषाद्युपलब्धिविरहस्य कर्तुरनुमानाभावात् तथा स्वाभाववचननिमित्तत्वात् अपौरुषेया वेदा इति । –शास्त्रदी० पृ० ६९ ६१६ । (६) अपौरुषेयत्वं नित्यत्वं वा । ( ) प्रवचन इव । (८) प्रवचनेऽपि ।

हेतुः इति चेत्, अत्राह–**परिणामेऽपि** परिणामनित्यत्वेऽप्यङ्गीक्रियमाणे **नवाक्ष(न चाक्षर)राशेर-पौरुषेयत्वं युक्तम्** अपुरुषकर्तृकत्वम् उपपन्नम् **येन** पुरुषाश्रितदोषाभावात् **स्वतः प्रमाणं वेदः स्यात्** । कुतस्तन्न युक्तम् ? इत्याह–**शास्त्रान्तरस्यापि** इत्यादि । **तदनुषङ्गाद्** अपौरुषेयत्वानु-षङ्गात् परिणामनित्यत्वस्य तत्रापि भावात् । न चैवम्, अतो व्यभिचारी हेतुः इति भावः ।

अथ 'दुर्भणत्वादिमत्त्वे सति तन्नित्यत्वात्' इति विशिष्टोऽन्यतं इति न दोषः, तत्राह– ५ **विशेषाभावाच्चेति** । तदन्तरपरिहारिण(हारेण) वेदे विशेषस्याभावात्, अशेषविशेषस्य अन्य-त्रापि[४०६ख] करणसंभवा[त्] । **च** इत्यवधारणे । परस्य तत्र नित्यत्वसावका(साधिका) युक्तिं हन्तुमाह– **कर्तुरित्यादि** । **व्यभिचारी अयमपि हेतुः** । दूषणान्तरमाह–**तावतेत्यादि** । **तावता** कर्तुरस्मरेण(स्मरणे) नित्यत्वमात्रेण **प्रमाणत्वे वेदस्य** कर्तुःस्मर्ता एननस्मत (कर्तुः स्मर्ता एव न स्मृतः) **शास्त्रान्तरस्यापि** न केवलं वेदस्य हिरण्यगर्भादिवत ततः तस्यापि **प्रमाणत्वं** १० **भवेदिति** । अनेन उत्तरभागो व्याख्यातः । अथ शास्त्रान्तरस्य तथापि न प्रमाणत्वम्, तत्राह **श्रुतेः** इत्यादि । **प्रमाणत्वमिति** ।

किंच, श्रुतेर्वर्णाना[पदानां वाक्यानां] वा प्रमाणत्वं भवेदिति पक्षाः । तत्रान्य(तत्राद्य) पक्षद्वये दूषणमाह–**वर्णानां पदानां च न क्वचित् प्रमाण्यं न भवेत्**, अपि तु वेदवयादावपि (वेदवत् वर्णपदादावपि) भवे[त्] प्रतिषेधद्वयेन प्रत्यक्षा(प्रकृता)र्थगतेः । नहि लोके वेदे च १५ वर्णपदःअग्न्यादि(वर्णपदे अग्न्यादिरूपे भिन्ने, उ)भयत्राविशेषात् । तृतीयपक्षे द्वैद्धत(द्वैतम्[४], कृत)-सङ्केतापेक्षाणाम्, अन्यथाभूताना वा ? प्रथमपक्षे दूषणमाह–**सङ्केत** इत्यादि । **प्रकृतवाक्य-राशेः** वैदिकवाक्यराशेः **इत्यं प्रति(इतरं प्रति)**पौरुषेयवाक्यराशिं **प्रति न कश्चिद्विशेषः** प्रमाणत्वेतरकृतो न भेदः । कस्मिन् सति ? इत्याह–**सङ्केतात् तदर्थप्रतिपत्तौ**, रागादिमान् पुरुषः सङ्केतं कुर्यादिति तन्नियतः सङ्केत इति मन्यते । दूषणान्तरमाह–**प्रकृतवाक्यराशेः पौरुषेय-** २० **वाक्यान्तरं प्रति न[क]श्चिद् विशेषः । व्यक्तिः** सदा सतः तद्वाक्यराशेः प्रकाशनम्, न तदर्थस्य **सङ्केते**त्यादिना उक्तत्वादस्य । **पौरुषेयी च सा व्यक्तिः** चिति(चिन्तिता) । **तया** तद्राशेः ईतरं प्रति न कश्चिद् विशेषः ।

एवं मन्यते–यथा[अ]सतो वाक्यराशेः[४०७क] रागादिमवा(मता)करणे नेति नियतार्थता, तथा प्रकृतवाक्यराशेः सतोऽपि तथाविधपुरुषेण व्यक्तौ तदन्यथा व्यक्तिरिति स २५ एव दोषः ।

ननु यथा[१०] व्यङ्ग्यं तेनापि (तेनाभि)व्यक्तिः, घटादौ तथादर्शनादिति चेत्, न खट्वादौ (खड्गादौ[११]) मुखादेरन्यथापि[१२] व्यक्तिदर्शनात् । अथ सर्वत्र प्रसृतस्य तद्वाक्यराशेः न केन-

---

(१) शास्त्रान्तरात् । (२) शास्त्रान्तरपरिहारेण । (३) वाक्यानां प्रमाणत्वमित्यत्र । (४) द्वैतमिति द्वौ विकल्पौ वक्ष्यमाणौ इत्यर्थः । (५) वैदिकवाक्यराशेः । (६) पौरुषेयवाक्यराशिं प्रति । (७) वैदिकवाक्य-राशेः । (८) रागादिमता । (९) इष्टविपरीता अभिव्यक्तिः स्यात् । (१०) यादृशम् । (११) आयते खड्गे आयतं मुखं दृश्यते । (१२) आयताद्याकारतया ।

प्रकृतं निगमयन्नाह–**तन्न** इत्यादि । **न[अ]पौरुषेयस्यापि** वाक्यराशेः **सङ्केतवशादर्थप्रतीतौ कथं विश्वासः** इदानीन्त(नीन्तन)स्य रागादिमत्त्वा[त्]सङ्केतविधातुः । यदि वा, व्यक्तिवत्[1] तत्करणमपि अन्यथा संभाव्यते इति चेत्, अत्राह–**पौरुषेयस्य** इत्यादि । [४०८ क][**पौरुषेयस्य**] पुरुषवचनस्य **विप्रतिपत्तिनिराकरणोपायः स्यात्** । कः ? इत्याह–**समुपाया (सम्प्रदाया)विच्छेदोऽपि न** केवलं माहात्म्यमेव । सोऽपि कुतः ? इत्याह–**तदर्थदर्शिभिः** ५ इत्यादि । शास्त्रार्थदर्शिभिः, **पुनः पुनः उच्छ(च्छि)न्नस्य उच्छ(च्छि)न्नस्य प्रवर्त्तनात्** सम्प्रदायस्य ।

अथ मतम्–अपोरुषेयवत् पौरुषेयमपि शास्त्रम् अर्थे तादात्म्यादिप्रतिबन्धाभावात् प्रमाणं मा भूत, अत्राह–**शास्त्रम्** इत्यादि ।

**[शास्त्रं शक्यविशेषरूपविषयाशेषं प्रमाणं स्वतः,** १०
**सर्वज्ञैः सह चेतसो विनियतं प्रतिपादकैः स्यात् परम् ।**
**कोऽन्यः शंसति वेद्यवेदकवचःशून्यं वचश्चेत्कथम्,**
**तत्त्वं वस्तुबलागतं जडधियः शुद्धोदनेः शिष्यकात् ॥३०॥]**

**शास्त्रं प्रमाणम्** । कुतः ? इत्याह–**स्वतः** स्वयोग्यतावशात् न तादात्म्यादिबलात्, कृत्तिकोदयवद् भविष्यति[2] शकटे । सर्वं स्यादिति चेत्, अत्राह–**विनियतं** किञ्चिदेव न सर्वम् । १५ किं तत् ? इत्याहा (ह–)**शक्य** इत्यादि । **शक्यस्वामा (शक्यश्चासौ) विशेषश्च** प्रत्यक्षादि**रूपः** तस्य **विषयो** गोचरो**ऽशेषो** यस्य तत्तथोक्त प्रमाणान्तरादि(वि)संवादकम् इति यावत् । अतीतानागतयोरसतोः प्रवर्त्तमान(नं) निर्विषय तदप्रमाणम्, तत्राह–**सर्वज्ञैः सह तश्चेतः(चेतसः)प्रमाणम्** । एव(वं)मन्यते–यथा सर्वज्ञात्म(सर्वज्ञज्ञानम)तीतादौ प्रवर्त्तमाना अपि(नमपि)स्वतः प्रमाण(ण)परमार्थतः तथा इदमपि इति । ततः 'यदि च सामान्यं २० व्यक्तिर्वा[वा]च्य शब्दानां भवेद् अतीतानागतं वाच्यं न स्यात्' इति[3], तन्निरस्तम्, सर्वज्ञानवक्षा वृतस्यापि तत्रातिधारणात् (सर्वज्ञज्ञानवत् अतीतानागतस्यापि तत्रावधारणात्) ।

यत्पुनरेतत्–

*"अतीतानागतेऽप्यर्थे सामान्य[वि]निबन्धनाः ।
पिनिविशन्ते (श्रुतयो निविशन्ते सद)सद्धर्मः कथं भवेत् ॥" २५
[प्र०वा० २।३४] इति[4],

तत्रेद चिन्त्यते–कुतोऽतीतानागतयोर्न तद्धर्मः ? तयोरसत्त्वात् । कदाऽसत्त्वम् ? स्व-

---

(१) अभिव्यक्तिवत् । (२) भाविनि । (३) "अतीत नागत वाच्य न स्यादर्थेन तत्क्षयात्"–प्र० वा० २।१८ । (४) "अतीतानागतेऽप्यर्थे सामान्यनिबन्धना सामान्याश्रया श्रुतयो निविशन्ते व्यवतिष्ठन्ते–आसीद् घटो भविष्यतीत्यादय. । तथा चासतो घटस्य सामान्यं धर्म इत्युक्तं स्यात् तच्च सामान्यं सत् असतोऽतीतादेर्धर्म कथ भवेत् ? न हि तैक्ष्ण्य शशविषाणस्य भवति ।"–प्र० वा० मनोरथ० ।

इन्द्रियसंहतेर्वैफल्यं स्यादिति। एतदप्युक्तम्–शब्दाद् व्यक्तिरूपप्रतिपत्तौ ताच्छेवत्संहतेः (त्तौ न ताव-दक्षसंहतेः) साफल्यम्, वैफल्यं भवेदिति, तत्राह–**प्रतिपादकैरि**ति। परांत्वमव (**परं** तत्त्वमव)-बोधयद्भिः। एतदुक्तं भवति–सर्वज्ञवचनाच्चेत् जनः तत्त्वमवैति स्वरूपेण, कथं न उक्तदोषद्वयम्? नो चेत्, किं सर्वज्ञपरिकल्पनेन? यतः इदं सुभाषितम्–*"ज्ञानवान् मृग्यते" [प्र०वा० १।३२] [1]इत्यादि। विकल्पाकारमिति चेत्, कथं तदप्रतिबद्धजन्मनः? अथ 'सर्वज्ञेषु विकल्पोऽ- ५ स्ति न युक्तमेतत्, उक्तोत्तरत्वात्। तथाहि–स्वलक्षणगोचरश्चेत् [2]तेषु विकल्पः, न पूर्वदोष-परिहारः, परत्रापि तदनिवारणा[त्] नापि प्रमाणसंख्याव्यवस्था[3]। अवस्तुसामान्यगोच[र]-श्चेत्, अस्तु, तेषु भ्रान्तता[4]। तत्र (तन्न) किञ्चिदेतत्। मानादि (नन्वनादि) सर्वज्ञैः सह इति चेत्, अत्राह–**स्याद्** इत्यादि।

ननु वेदवेदकवचनानामभावात् कथं क्वचित् कस्यचित् शास्त्र (स्त्रं) स्वतः प्रमाण- १० मिति चेत्, अत्राह–**कोऽत्र (न्य)** इत्यादि। [४०९ ख] सिद्धौदनेः शिका (**शुद्धोदनेःशिष्य-कात्**) दिग्नादेः (दि ग्ना गा देः) **कोऽन्यो** विपश्चित् **संस (शंस)** त्युच्चारयति, किन्तु स एव। किम्? इत्याह–**वचः**। किंभूतम्? इत्याह–**वेद्यं** च घटादि **वेदकं** च ज्ञानं **वच**श्च घटा-द्यभिधानम् तानि **शून्यानि** निःस्वभाविति (निःस्वभावानि) यस्मिंस्तत्तथोक्तम्। अनेन परस्य स्ववचनविरोधं दर्शयति। तथाहि–किञ्चिदपि चेन्नास्ति, **[कथम्]** केने (केन) तत्प्रतिपादकं १५ वचनम्[5]? [6]अस्ति चेत्, कथं 'न किञ्चिदस्ति' इति? स्वप्नादिवत् स्यादिति चेत्, कथ त[त्]? भ्रान्त्या इति चेत्, उक्तमत्र विभ्रमैकान्ते [7]तदसिद्धेरिति। सर्वविकल्पातीततयेति चेत्, अत्रा-प्युक्तम्। किंभूतात्? इत्याह–**जडधियः** इदन्तया [नेदन्तया] वा तत्त्ववेदन [वि] मुखधियः। आनापि (अनेनापि) स्वसंवेदनाध्यक्षविरोधम्[8]। तथा शून्यता चेत्, स्वसंवेदनाच्च ध्यान (ज्ञाने) सर्वविकल्पातीतता, सा वेनसा (चेतसा) तद्वेद्येति। कुत एतत्? इत्यत्राह–**तत्त्व (त्त्वं)** जीवा- २० [दि] वस्तु, **वस्तुबलेनागतं यतः**।

इति र वि भ द्र पादपङ्कज च (जभ्रम) रा न न्त वी र्ये विरचिताया
सि द्धि वि नि श्च य टीकाया शास्त्रसिद्धिः सप्तमः प्रस्तावः।

---

(१) 'कश्चित्तदुक्तप्रतिपत्तये ' इत्युत्तरार्धं। (२) सर्वज्ञेषु। (३) प्रमेयद्वैविध्याद्धि प्रमाणद्वित्वमस्या दर्वस्थाप्यते। (४) स्यादित्यर्थः। (५) 'अस्ति' इति कथ्यते। (६) किञ्चिदस्तीति यदि उच्यते। (७) विभ्रमस्याप्यसिद्धेः। (८) दर्शयति।

यां वृक्ष इति ततो भवति बुद्धिः तदा तत्र[1] शाखा इत्यपि इति चेत्, न, शाखाया [2]वृक्षारभ्यु(रभ्य)त्वप्रसङ्गा[त्। अ]थ यत् पूर्वं तदारं(तद् आरम्भकम्,)शाखाश्च पूर्वा इति, तन्न सारम्, [४१० ख]पूर्वा(पूर्वं)तासामदर्शनात् पटात् पूर्वं तन्तुवत्। अनुमीयन्त इति चेत्, शाखाभ्यः पूर्वं वृक्षोऽस्तीत्यनुमीयताम्। सूक्ष्म(क्ष्मात्)स्थूलवत् [3]स्थूलादपि सूक्ष्मस्य कपालादेर्दर्शनात्। अथ दृश्यस्य सतोऽदर्शनम् पूर्वबाधकम्, एतदन्यत्रापि समानमिति न किञ्चिदेतत्। ५
न च कुण्डवदरसम्बद्ध्यमान एव कश्चिद् 'इह कुण्डे बदराणि' इति प्रत्ययहेतुः प्रतिपन्नः, यतोऽन्यत्र[4] तथा कल्पना स्यात्। तत्सम्बन्धः समवाय इति चेत्, 'इह समवायिषु समवायो वर्त्तते' इति बुद्धिर्यदि अन्यसमवायनिबन्धना, अनवस्था। नो चेत्, अनयैव व्यभिचारस्तत्साधनस्य।

स्यान्मतम्–विशेषणीभावः(व)सम्बन्धनिबन्धना तद्बुद्धिरिति, तन्न सारम्, समवायवत् [5]जात्यादयोऽपि द्रव्यादीना विशेषणम् इति सर्वत्र तदिबन्धत्व(तन्निबन्धनत्व)प्रसङ्गात्। १०
विशेषणीभावेऽपि समवायवत्[6] प्रसङ्गः चिन्त्यः। तन्न समवायो नाम।

अथ बुद्धिरूपतयात्मनः परिणाम[णामात् अ[7]]स्यात्तत्र[8] समवायः, तर्हि सिद्धमिदम् **'बुद्धिः आत्मा'** इति। ननु सौगतमतं स्यादिति चेत्, अत्राह–**अनेकान्ते त**(न्तेत्यादि) तत्त्वतः सिद्धः तदात्मा इत्य**नेकान्तः तत्त्वं** स्वरूपं यस्येति। एकस्याऽनेकधर्मात्मकत्वस्य कल्पितत्वाद् अनर्थः स भवेत् इति चेत्, अत्राह–**अर्थः** सिद्धो निरूपितनीत्या नियतविषय[ः] १५
सिद्धः। ततो न विवादपरिसमाप्तिः इति चेत्, अत्राह–**त्रिकालविषय** इति। त्रिषु कालेषु व्यवस्थिताः पदार्था अपि त्रिकालशब्देन उच्यन्ते, **त्रयः काल (ला) विषयो** यस्य इति। [9]तदभावे [४११ क] सकलव्याप्तेरसिद्धेर्न किञ्चिदनुमानं भवेत्। चोदना वा कस्मै[त्रि]कालविषयमर्थं निवेदयेत्? यतः ***"चोदना हि"** [शाबरभा० १।१।२] [10]इत्यादि सुभाषितं भवेत्।

> सर्वज्ञरहितं सर्वं चिन्तयंश्चारुचक्षुषा। २०
> स चार्वाकश्चिरं चित्रबधं नीतोऽनया दिसा(शा)॥

कश्चिदेव तथा स्यादिति वैशेषिकः, तत्राह–**सकलो** निरवशेषः, नहि कश्चिदेवात्मा चेतनः। साकल्येन व्याप्ति[ः]ज्ञेया। तथा चेत्, इतरो तरो [11](इतरोऽपि), नानुमानो(नं) वा स्यात्। न चानुमानमन्तरेण अजातोऽपि(चार्वाकोऽपि)जीवतीति निरूपितम्।

यदि मतम्–षट्प्रमाणकः तद्विषयः[12] इति सिद्धसाधनम्, तदुक्तम्– २५

---

(१) वृक्षे। तुलना–"पटस्तन्तुष्वित्यादिशब्दाश्चेमे स्वयं कृता। शृङ्गं गवीति लोके स्यात् शृङ्गे गौरित्यलौकिकम्॥"–प्र० वा० १।३५०। "वृक्षे शाखा शिलाश्चाग इत्येषा लौकिका मति। ता पुनस्तास्विति ज्ञान लोकातिक्रान्तमुच्यते॥"–तत्त्वस० पृ० २६७। लघी० स्ववृ०पृ० १४। (२) वृक्षोत्पाद्यत्व। (३) घटात्। (४) इह तन्तुषु पट इत्यत्र। (५) सामान्यादय। (६) विशेषणीभावोऽपि स्वसम्बन्धिभ्यां सम्बद्ध असम्बद्धो वा इत्यादि। (७) बुद्धे। (८) आत्मनि। (९) त्रिकालविषयकजीवाभावे। (१०) "चोदना हि भूत भवन्तं भविष्यन्तं सूक्ष्म व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थमवगमयितुमल नान्यत्किञ्चनेन्द्रियादिकम्"–शाबरभा०। (११) सर्वज्ञोऽपि सिद्ध स्यात्। (१२) त्रिकालविषय।

*"यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ।"

[मी० श्लो० चोद० श्लो० ११०] इति[1]

तत्राह–स्वविषय इत्यादि । स्वस्मि[न्] त्रिकालरूपे विषयो(ये) वैशद्यमासादय तत्र च(सादयन्, तत्र च) 'सकलः' इति न सम्बध्यते ग्रन्थान्तरविरोधात् । स्वग्रहणेन ५ निखिलसर्वज्ञत्वनिषेधः । नहि सर्वस्यगोचरे निरावरणं ज्ञान(नं) निखिलप्रकाशकं युक्तम् मानुमण्डलवत् । तदुक्तम्–

* "ज्ञो ज्ञेये कथमज्ञः स्यादिति (स्यादसति) प्रतिबन्धरि ।
दाह्योऽ(ह्येऽ)ग्नि' दाहको न स्याद[स]ति प्रतिबन्धरि ॥"

[योगबि० श्लो० ४३१] इति[2] ।

१० यत्पुनरत्रोक्तं प्रज्ञाकरेण–*"सकलविषयत्वे सति आत्मनो निरावरणत्वे तत्र वैशद्य(द्यं) सिध्यति तत्सिद्धौ च तद्विषयत्वं सिध्यति इत्यन्योऽन्य(न्य)समाश्रयः ।" इति तत् 'त्रिकालविषय' इत्यनेन निरस्तम् । न तस्यानुमानमन्तरेण प्रतिमासाद्वैतेऽपि कीचिदस्ति इत्युक्तम् । तैन व्याप्तिग्रहणमन्तरेण नेत्यपि । विषयग्रहणेन कामशोकभयादिवत्[3] वैशद्यमिति निषिद्धम् । नहि तद्विषये वैशद्यम् [४११ख] ।

१५ ननु त्रिकालविषयं मनोज्ञानम् अभ्यस्य तदृष्टेः । तैन किमिव तत्र विशदं यथार्थं वा स्यात्, दृष्टान्तयुक्त्या(क्त्य)भावे तदसिद्धेः । तदुक्तम्–

*"मृष्यमाणो यथाङ्गारः शुक्लतामेति जातुचित् ।
मनोज्ञानं तथाभ्यासात् नैव याति तदर्थताम् ॥" इति

तत्राह–प्रहीण इत्यादि । प्रहीण तिमिरम्, क्षयक्षयोपशमेन रजोनीहारादेः, यस्य २० तस्योक्तम् अक्षम् इन्द्रियं यस्य तस्येव प्रत्यक्ष(तस्य इन्द्रियप्रत्यक्षम्) आविर्भूतस्य तमोपक्रमाद् सोऽपि तथोक्तः स इव तद्वदिति । एवं मन्यते–यथा चन्द्रादिज्ञानं स्वविषये अविसंवादकं वा आवरणवशात् न स्वतः तथा मनोविज्ञानम्, यथा च तद् आवरणापाये विशदं तत्र यथार्थं च तथा मनोज्ञानमपीति । एवं हि अवगीयं भवेद् यदि तद् अविसंवादयथार्थग्रहणस्वभावं नित्यं वा स्यात् तथानुक्तम् 'अनेकान्ततत्त्व' इति वचनात् सत्यं स्वभावाभावस्या(सत्स्वभा २५ वित् सत्य)विशदयथार्थग्रहणदर्शनात् । तथापि तत्स्वभावं तद् इति चे(चेत् हि)चन्द्रादि ज्ञानमपि तत्स्वभावम् इति न परतोऽप्रामाण्यम् । यथा चात्र तिमिरादि तत्कारणमुपलभ्यते तथा मनोज्ञानमनुमीयते । न च मीमांसकस्य अनुमान[म]प्रमाणं वेदनित्यताऽसिद्धिप्रसङ्गात् ।

---

(१) मीमांसकः । "एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते । नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ –मी श्लो चोदनासू श्लो १११ । (२) तद्वत्तमिदम्–अवध म भा पृ ९९ । महत्म पृ ५ । असति प्रतिबन्धके... न स्यात्कथमप्रतिबन्धकः –योगबि । (३) अनुमानम् । (४) वचनम् । (५) कामरूपितं भावनाप्रभवम् । (६) कामादिभावनाविषये । ( ) मनोज्ञानम् । (८) "घृष्यमाणो हि नाङ्गारः शुक्लमेति जातुचित् । विशः स्वभावसम्पन्नोऽवैधचित विभावैर्ते ॥"–त वार्तिकाल २।१३७ । (९) दोषात् ।

ननु[द्वि]चन्द्रादिज्ञानं यदि तत्स्वभावं कदाचनापि न ततो विशदस्य यथावस्थितस्य वाऽर्थस्य प्रतीतिः स्यादिति चेतिदितितत्र(चेत , तदितरत्र)समानम् । अथ सत्यस्वप्ने तस्य अन्यतः सत्यार्थता वैशद्यं च, तत एव चन्द्रादिज्ञानं[1] ज्ञानेऽपि इति स्वतोऽप्रामाण्यं परतः [४१२क] प्रामाण्यमिति प्रसक्तम् । अन्यस्यादर्शनमुभयत्र समानम् ।

ननु तदुपलम्भवत तस्य स्वविषये वैशद्यासादनेको(वैशद्याभावादनेकान्तो)हेतुः इति चेत, ५ अत्राह–[अ]तिशयो हेतुः इति । **अतिशय** उत्कर्षः । कस्य इति चेत् ? उच्यते– **[आवरणस्य] 'प्रहीणतिमिराक्षेन्द्रियपलम्भादिवत् स्वविषये वैशद्यमासादय-न्तीति(यन्' इति)** वदता 'प्रहीणावरणतिमिर' इत्युक्तं भवति । तस्माद् **आवरणातिशयो हेतुर्लिङ्गम्** । तथा च प्रयोगः–आवरणप्रहाणं पुरुषेषु क्वचित परमकाष्ठानिष्ठम् अतिशयत्वात तिमिरादिप्रहाणवत् । १०

ननु तत्प्रहाणवत[2] दृष्टिप्राहमप्य(प्रहाणमप्य)तिशयवद् उपलभ्यते ततोऽस्या[3] अपि तद्वद्-भावः स्यात , न चैवमिष्यते, ततो व्यभिचार इति चेत , अत्राह–**कर्म** इत्यादि । **कर्मणां ति(वि)मोक्षणम्** आत्मनः सकाशाद् अपसारणं तस्मै तदर्थो हेतुः न पुनः तदत्यन्ताभावार्थः । कुतः ? इत्याह–**न पुनः** नैव **द्रव्यस्य** जीवस्य पुद्गलस्य अन्यस्य[4] वा क्षयः अत्यन्ताभावोपल-(भावो ल)क्ष्यते यतः सतोऽत्यन्तविनाशाभावात इति प्रतिपादितमिति न पुनरुच्यते । ततो न १५ यथात्मनःर्मणा तथा तस्यप्यनात्मना(ततो यथा आत्मनः कर्मणा तथा तस्या अपि न आत्मनः) विमोक्षणसंभवान्न व्यभिचार इति भावः । यदि वा ज्ञानस्य वैसत्यस्य(वैशद्यस्य)वा अतिशयो गृह्यते ।

नन्वेवं **स्वविषये सद्य(वैशद्य)मासादयन् सिद्धो**ऽपि किं सुगतोऽन्यो वेति विशेष-रूपतया न सिद्धः तत्प्रतिबद्धहेत्वभावादिति चेत् , अत्राह–**श्रुत** इत्यादि । **श्रुतेः(श्रुतः)**श्रवण- २० विषयतामुपनीतो **लोके** अनन्तरप्रस्तावे नाः(वा)स्याद्वादः स्यात्कारलाञ्छनो वाक्यराशिः प्रशस्तो वा कर्मफलसम्बन्धादिविशेषः **ततः**[४१२ख]सिद्धिः (सिद्धः) 'तद्विशेषः' इत्यध्याहारः, वचनविशेषाद् वक्तृ(क्त्र)विशेषसिद्धे[र]प्रतिषेधात ।

ननु सुगतेनापि कल्पितः स्याद्वाद उक्त इति सोऽपि ततस्तत्र वैशद्यमासादयन् सिद्धः स्यादिति चेत् , अत्राह–**परमार्थतः** । २५

स्यान्मतम्–ज्ञानस्य वैशद्यम् अक्षव्यापारात् , अक्षाणा च सन्निहिते वर्त्तमाने व्यापारः, तत्कथं सं[5] तत्र वैशद्यमासादयन् सिद्धोऽपि सर्वज्ञः स्यात् । उक्तं च–

*"सन्निहितं वर्त्तमानं च गृह्यते चक्षुरादिना ।
न तत्स[मु]द्भवं ज्ञानं जायतेऽतीतभाविनि ॥" "इति ।

चेत् , अत्राह–**धीः** इत्यादि । ३०

(१) 'ज्ञाने' इति दुर्लिखितम् । (२) आवरणप्रहाणवत् । (३) दृष्टिर्ज्ञानम् । (४) दृष्टेरपि । (५) आवरणवत् । (६) आकाशादे । (७) दृष्टेः । (८) तदविनाभावि । (९) श्रुतात् कल्पितात् । (१०) बुद्ध्यात्मा । (११) "सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना"–मी० श्लो० सू० ४ श्लो० ८४।

['धीरत्यन्तपरोक्षेऽर्थे न चेत्पुंसां कुतः पुनः ।
'ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत् साधनान्तरम् ॥७॥

परोक्षज्ञानमित्यत एव कथमनागतार्थविशेषेषु ज्योतिर्ज्ञानाविसंवादः तत्स्वभाव कार्ययो प्रागग्रहणात्, श्रुतेश्च तत्र प्रामाण्यानभ्युपगमात् विध्यादिविषय नियमात्, ५ प्रमाणान्तराभावात् । यदि पुन त्रिकालविषया श्रुतिरिष्यते, प्राप्तं परोक्षाणां पुरुष ज्ञानमिति ।]

धानन्तपोक्तो (धीः अनन्तपरोक्ष) पुरुषारमा वैशद्यमामारयन्त (यद् न) चेत् न विषये यदि । क्षा(क ? अ)त्यन्तपरोक्षेऽर्थ धमारे (धमार्दौ) । 'स्वतः' इति ग्रहणं लिङ्गादिव्य पाद्यायम् । कुतः प्रमाणात् कुतश्चित् । पुनः इत्यत्र चान्यार्थो द्रष्टव्यः—पुनः पुनः अनाद्यनन्त १० काले ज्योतिर्ज्ञानाविसंवादः ज्योतीषि(ज्योतींषि) ग्रहनक्षत्रादीनि तेषां ज्ञान ग्रहणा- पराग(णोपराग)प्रचारतत्फलतत्कारणाधारप्रमाणादिमाविषयत्वात् परिच्छेदः तस्याविसंवाद तदभावे तदन्यकारणाभावात् । केषाम् ? इत्याह—पुंसाम् पृथग्जनानाम्(पृथगात्मनाम्) अस्ति च तदविसंवादः ततोऽस्ति तत्र धीरिति । यस्तु कश्चिद् विसंवादः समास्ताव(सः शास्त्र) सम्य चापरिज्ञानात् लिङ्गलिङ्गिसम्बन्धाज्ञानाद् अनुमेयज्ञानविसंवादवत् । तत्सम्बन्ध(तत्सम्य- १५ क्)परिज्ञाने तदविसंवाददर्शनात् । अपौरुषेयं शास्त्रमस्ति ततः तदविसंवाद इति चेत्, अत्राह— [श्रुतात्] शास्त्रात् चेत् तदविसंवादः साधनान्तरम् अविशदरूपात् सकलस्य(सा) अन्या- दिदं शास्त्ररूपम् अपरं साधनम् । [अ]विसंवादाद्वा वैधर्म्येण [४१३क] तदभावात् ।

कारिकां विवृण्वन्नाह—परोक्षज्ञानमित्यादि । ननु परोक्षस्य अस्मदाद्यपेक्षया देशादिव्य- वहितस्य धर्मादेर्दर्शनं केन अनुमानमेवेष्यते, येनैषमो(वं यो)च्यते ? न सौगतादिभिः सर्वज्ञ २० वादिना(ना) प्रत्यक्षस्यापि तज्ज्ञानस्य तेनाभ्युपगमात् । नापि मीमांसकेन, आगमस्यापि तेनाभ्युपगमात् । न च लौकायतिकेन तस्या(तैस्या)नस्यानुमानस्य अन्यस्य वा प्रमाणत्वेन तेनानभ्युपगमादिति चेत् सौगतेन इति ब्रूमः । तथाहि—यस्मात् प्रत्यक्षं तदाकारानुकार(रि च) तस्यैव ग्राहक(कं) ज्ञानं सुगतस्यापीति तदाकारग्राहकः परोक्ष[ः] । स च तदाकारज्ञानस्य विवेकात्(कात्) यथा अस्मदादिभिरनुमीयते तथा सुगतेनापीतरथा(पि, इतरथा) प्रत्यक्षेण २५ अनुमानेन वा[त]द्दर्शनस्य तेनाऽपरिच्छेदात् पृथग्जनादप्यसौ पापीयान् । यदि वा चा[र्वा]कस्येति शिष्यः । तेनप(तेनापि अ)सर्वज्ञागमवादिना(वादिना') व्यवहारमिच्छता परचैतन्यादाविव नगपाद्यनुमानमभ्युपगन्तव्यम्, अन्यथा न संपूर्णव्यवहारसिद्धिः ।

---

(१) तद्वृत्तौ भ्रम—" "श्रुताच्चेत्" " प्र मी पृ १९। (२) तुलना—"ग्रहादिगतयः सर्वाः सुखदुःखादिहेतवः । येन साक्षात्कृतास्तेन किन्न साक्षात्कृतं जगत्"—न्यायवि ३।२१२। "चन्द्रसूर्योपरागादेः क्ता संवादसर्वनात् । अप्रत्यक्षेऽपि धामान्येव प्रामाण्यं न युज्यते ह"—धवला २।३। (३) असर्वज्ञत्वाद् इत्यर्थः । (४) अत्यन्तपरोक्षेऽर्थे । (५) सर्वज्ञसिद्धिप्रस्तावे । (६) शास्त्रेऽविसंवादाभावात् । ( ) परोक्षज्ञानस्य । (८) इति नियमात् । (९) तदन्यकारणाभावानुपपत्तेरित्यर्थः । (१ ) सर्वज्ञागमविरो- धकवादिना ।

भवतु तत्तदेवेति चेत्, अत्राह–**कथमनागत** इत्यादि। **अनागतार्थविशेषेषु ग्रहणादिषु** भाविषु **ज्योतिर्ज्ञान(नाऽ)विसंवादः कथं[न कथं]चित्**। कुतः ? इत्यत्राह–**तद्** इत्यादि, **तेषाम्** अनागतार्थविशेषाणा ये **स्वभावकार्ये** तयोः **प्रा[गग्रहणात्]** ग्रहणादेः पूर्वनिर्णयासंभवात्। एव मन्यते–सुगतेन सह तत्स्वभावस्य निर्णये तेषामनागताथांता (तार्थता) कुतः ? तद्रूपज्ञानस्य ग्रग्नादेर्वा तत्कार्यस्यापि निर्णये स एव दोषः। 'नहि भावि कारणम्' इति निरूपितम्। ५ यदि वा, अनुमानप्रवृत्तिः(त्तेः) [४१३ख] प्राज्ञात(प्राग् व्याप्ति) निर्णयासंभवात् एकद्विप्रमाणनियमवादिनाम् इति द्रष्टव्यम्। तर्हि परोक्षज्ञानम् आगमोऽप्यस्ति ततोऽयमदोष इति, तत्राह–**श्रुतेश्च** इत्यादि। श्रुतिजनित परोक्षार्थज्ञानं **श्रुतिः** तस्याश्च तत्र अनागतनष्टादौ **प्रामाण्यानभ्युपगमात्** सौगतादिभिः। इदमत्र तात्पर्यम्–यदा अनागतविषय प्रत्यक्षमनुमानश्चा (नं वा) सुगतस्य अन्यस्य वा न विद्यते, तदा अपौरुषेयी श्रुतिः तत्र प्रमाणयितव्या। न च तत्कृतमिति १० मीमांसकैः तत्प्रामाण्यमिष्यत इति चेत्, अत्राह–**विध्यादी**त्यादि। **विधिः आदिर्यस्य** नियोगभावनादेः स एव **विषयः** तत्र **नियमात्**, श्रुतेस्तत्र प्रामाण्यानभ्युपगमात मीमांसकैरपि इति। अन्यदेव तत्र प्रमाणमिति चेत, अत्राह– **प्रमाण** इत्यादि। निरूपितात् प्रमाणादन्यस्य [**प्रमाणान्तरस्य**]**तत्राऽभावात्** इत्यर्थः। अथ अविशेषेण **त्रिकालविषया श्रुतिः** इष्यते; तत्राह–**यदि पुनः** इत्यादि। तत्रोत्तरमाह–**प्राप्तम्** इत्यादि। १५

अथ वेदः स्वयमेव परोक्षमर्थं प्रतिपादयति इति किं तत्र ज्ञानेन इति चेत् ? अत्राह–**त्रिकालविषयम्** इत्यादि।

**[ त्रिकालविषयं तत्त्वं कस्मै वेदो निवेदयेत् ?**
**अक्षय्यावरणैकान्तान्न चेद्वेत्ति तथा नरः ॥३॥**

**पुरुषाः कुतश्चनापि तदविद्यावरणविच्छेदानिष्टेः न बोद्धुमर्हन्ति, तत्प्रकर्षानिवारणात्। वेदो न कस्यचित् स्वतः प्रमाणम्, तदविनिश्चयात्। ]** २०

**कस्मै** न कस्मैचित् **वेदो निष्पादयेत् (निवेदयेत्) तत्त्वम्**। किन्तु (किं तत् ?) **त्रिकालविषयम्** अचेतनत्वात इत्यभिप्रायः। चक्षुरादिवत स्वयोग्य (ग्ये) तत्र ज्ञानं जनयेत् सर्वस्य न वा कस्यचित् तत्र सङ्केतानर्थक्यम्। किमपिसेवेण (किमविशेषेण) न निवेदयेत् ? इत्याह–**अक्षय्यावरणे(णै)कान्तात्** कारणात् **न चेद्** यदि **वेत्ति** त्रिकालविषय तत्त्वं २५ **तथा** विशदप्रकारेण **नरः** तथा [४१४क] तद्वेदने निवेदयेत् सङ्केतकारिणो विशिष्टस्य नरस्य अभावादिति।

वेदार्थस्य साक्षात कश्चित् ज्ञाताऽस्तु न तु सर्व इति चेत्, अत्राह–**पुरुषा** इत्यादि। तद्विषयदोषावरणविच्छेदाद् बोद्धुमर्हन्तीति निवेद[य]त्राह–**कुतश्चनापि** इत्यादि। न केवलं

---

(१) एकप्रमाणवादिन चार्वाकस्य, द्विप्रमाणवादिन बौद्धस्य च। (२) वेद। (३) अनागते। (४) प्रमाण स्वीकृतम्। (५) अनागतादौ। (६) उद्धृतोऽयम्–प्र० मी० पृ० १२। (७) त्रिकालविषय।

स्वत एव अपि तु इत्यत्र न कारणात् सम्यग्दर्शनादेः तस्य(तस्य) रागादि अविद्यावरणं च तथा विच्छेदस्य नाशस्य प्रतिषेधः न योद्धुमर्हन्तीति ।

ननु साकल्येन तदावरणविच्छेदो नास्ति पुरुषाणाम् अनादिमनोर्विद्यते (?) इति चेत् अत्राह–तदित्यादि । तस्य संविच्छेदस्य प्रकर्षस्य अतिशयस्य सर्वथा[अ]सिद्धेरनिवारणात्

५ 'प्राप्तं परोक्षाणां पुरुषज्ञानम्' इति । चर्चितमेतदनन्तरम् ।

ननु सत्यम्, पुरुषा न वेदार्थं बोद्धुमर्हन्ति, वेदः पुनरपौरुषेय[ः]स्वतः स्वार्थं प्रतिपा(पा)दयति । तदाह–वेद इत्यादिना । परः पृच्छति कस्य प्रमाणम् इति चेद् इति । तं प्रत्याह–न कस्यचित् सूक्ष्मस्येति(स कथयेत) । कुतः ? इत्यत्राह–तदित्यादि । वेदार्थतत्त्वाऽविनि श्चयात् पुरुषत्वेन रथ्यापुरुषवत् स्वयं तर्हि निश्चयाभावात्, तस्य चाऽवेदकत्वेन तत्र विनि

१० श्चयानुत्पादनात इति भावः ।

किंच, सर्वं वचनं[अन्यम्, अ]र्थप्रतिपादनं च पुरुषापेक्षम् आत्मनि दृष्ट(दृष्ट)मपि यदि वैदिकं वचनमन्यथा संभाव्येत, तर्हि पुरुषेषु अवधानं विप्रकर्षं अत्रा[दृ]ष्टमपि तदभावेऽपि स्यात् ।

ननु वेदे कर्तु[:]स्मरणं साधनमस्ति नेह तदिति चेत्, न अत्रापि प्रत्यभिज्ञानाऽस्ति

१५ इति दर्शयन्नाह–जीवानाम् इत्यादि ।

[जीवानामसहायाक्षाणां शास्त्रार्थविदः क्रमात् ।
विज्ञानातिशये विद्वान् को विप्रतिपद्यते ॥४॥

स्वाभरादेः शास्त्रार्थतत्त्वज्ञपर्यन्तस्य जीवराशेः उत्तरोत्तरबुद्धिप्रकर्षं प्रति न कश्चित् विप्रतिपत्तुमर्हति अन्यत्र विप्रकृष्टसंवित्तिविवादिनः शौद्धोदनिशिष्यकात् । शास्त्रा

२० र्थविदां च तदर्थज्ञानप्रकर्षः स्वभावपाटवाभ्यासतारतम्यात् सर्वथाऽस्त्येव । कथम् ? उपनिबन्ध तथैव कस्यचित् शास्त्रार्थनिरपेक्षं परोक्षज्ञानपाटवं यदि स्यात् किं विरुध्येत ? यतोऽसंभवत्प्रकर्षेषु स्वत एव वेदः प्रमाणं न स्यात् । यथा वचनत्वाविशेषेऽपि वेदः स्वत एव स्वार्थं प्रतिपादयति तथा पुरुषत्वाविशेषेऽपि कश्चिदेव अक्षनिरपेक्षः परोक्षाय विपरी करोति । लोके कीदृशं प्रमाणं सर्वज्ञस्याभावसाधकम्, प्रत्यक्षादेः अभावविषयत्वविरोधाद

२५ भावप्रमाणस्यापत्तेरनभ्युपगमात । तदभावे शास्त्रं युक्त्यबाधितमस्ति ।

'नास्ति सर्वज्ञः अनुपलम्भात् खपुष्पवत्' इत्यत्रोच्यते–यदि साधकप्रमाणनिवृत्तिः आत्मा वा तद्रहितोऽनुपलब्धिः यथास्व नैरात्म्यं प्रसज्येत । न असर्वदर्शी सर्वत्र सदात्मविशेषान् साक्षात्कर्तुमर्हति । तत एव प्रत्यात्मविज्ञानाप्यनुमातुमशक्यं लिङ्ग

(१) व्यवहारविच्छेदस्य । (२) अर्वाचाम् । (३) 'नापि कश्चित् वेदार्थज्ञापकः पुरुषत्वात् रथ्यापुरुषवत् इत्यनुमानेन । (४) तत्त्वज्ञत्वम् । (५) अपौरुषेयम् विषयं च । (६) इन्द्रियात् । ( ) इन्द्रियाभावेऽपि । (८) अतीन्द्रियत्वसाधकम् । (९) तदुक्तमत्र – विज्ञानातिशये "न्यायवि वि द्वि पृ २५२।

भावात् । तद्विशेषेण अनेकान्तात्मकवस्तुतत्त्वसाधनात् । कुतश्चित्तत्प्रतिपत्तौ अप्रतिपन्नविशेषाविनाभाविनः प्रतिपन्नस्वभावस्यापि तथैवानात्मकत्वप्रसङ्गात् । ततो न कस्यचिदुपलब्धिरिति सर्वाभावः । श्रुतस्याप्येवं प्रसङ्गात् । न हि ``विशिष्टविषयत्वात् पुरुषार्थसिद्धेः । अन्यथाऽनवधेयत्वमेव शास्त्रस्य । तदियं प्रतिपत्तृप्रमाणनिवृत्तिः सर्वसम्बन्धिनी प्रतिपत्तुमशक्येति न केवलं सर्वज्ञाभावं साधयति अपि तु सर्ववस्तुव्यतिरेकं च । भावे तर्हि किं प्रमाणम् ? शास्त्रं ब्रूमः । तत्सद्भावप्रतिपादनात् चतुर्दशगुणस्थानोपवर्णनाच्च । कथमस्य प्रामाण्यम् ? चोदनायास्तर्हि कथम् ? नित्यत्वात्, तस्यास्तत्; तत एव प्रवचनस्यास्तु । कथं प्रवचनस्य नित्यत्वम् ? यथा चोदनायाः । कथं तर्हि चोदनायाः नित्यत्वम् ? कर्तुरस्मरणादिति; तत एव परमागमस्य । परमागमस्य तीर्थकराः कर्तारः स्मर्यन्ते इति चेत्; ननु कणभक्षादयो वेदस्य कर्तारं स्मरन्ति । कणभक्षादीनां स्मरणस्य अप्रामाण्ये पुनः इतरेषां परमागमकर्तृविषयस्मृतेः प्रामाण्ये न कश्चिद्विशेषः । तदेतत् प्रवचनमपौरुषेयम्, तीर्थकराः समुत्सन्नं प्रवचनं प्रवर्तयन्तीति सर्वज्ञागमयोः प्रबन्धनित्यत्वेन[1] नित्यत्वोपगमात् कुतस्तत्र एवमन्योऽन्याश्रयणं स्यात् । तन्नानुमानं सर्वज्ञाभावसाधनं प्रवचनं चेति स्थितम् । न च नानेकान्तशासनं जीवानां नानापरिणामप्रतिपादकम् । न च तत्प्रत्यनीकं प्रमाणमस्ति स्याद्वादेन बाधितविषयत्वात् पिटकत्रयवदिति । स हि एकान्तो न संभवति निर्विषयं वेति राजपथीकृतमेतदिति । यदि पुनः ते न सर्वज्ञाः वक्तृत्वादिभ्यः [वक्तृत्वात् पुरुषत्वात् रागादिमत्त्वात् ] रथ्यापुरुषवदिति; जैमिनिरन्यथा [वेदज्ञः कुतः] ? नहि किञ्चित्साधर्म्यात् सर्वं तथैवेति प्रतिपत्तुं युक्तमतिप्रसङ्गात् । [2]तदिमे वक्तृत्वादयोऽहेतवः अन्यथानुपपत्तिरहितत्वात् विपक्षे बाधकाभावात् । 'सर्वज्ञो नास्त्यनुपलम्भात्' इति व्याप्तिसाधने [3]स्वोपलब्धिः [असिद्धा] सर्वप्रामाण्य ` सर्वज्ञानां [स्वपरोपलम्भसंभवात्]

**न** विद्यते **[सहायो]** यस्य **तदसहायम्** [४१४ ख] अतर्क(**अक्ष**)मिन्द्रियम् तस्माद् एकेन्द्रियादेः **आशास्त्रार्थविदः जीवानां** प्राणिनां**[क्रमात्]**क्रमेण**[वि]ज्ञानातिशये न वै विद्वान् विप्रतिपद्यते,** यथा परमाणोः परिमाणाद् आरभ्य आगगनात् परिमाणातिशय इति । नन्वयमर्थः *"ज्ञानस्यातिशयात् सिध्येद् विभुत्वम्" [ सिद्धिवि० ८।८ ] इत्यादिना [4]प्रतिना प्रतिपादयिष्यते, तत्किमर्थमिह उच्यते ? तस्माद् अन्यथा व्याख्यायते– **विद्वान्** पठितैः(पण्डितः)शास्त्रेषु उक्तानुक्तपर्यालोचनपटुः **न[वै]**नैव**[वि]प्रतिपद्यते** अक्ष-

(१) तुलना–"एवं यत्केवलज्ञानमनुमानविजृम्भितम् । नर्ते तदागमात् सिध्येत् न च तेन विनागम ॥ सत्यमर्थबलादेव पुरुषातिशयो मत । प्रभव पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥"–न्यायवि० ३।४१२–१३ । (२)तुलना–"सर्वज्ञप्रतिषेधे तु सन्दिग्धा वचनादय ।"–न्यायवि० ३।३४९। (३) तुलना–"सकलज्ञस्य नास्तित्वे स्वसर्वानुपलम्भयो । आरेकासिद्धते तस्याप्यर्वाग्दर्शनतोऽगते ॥"–न्यायवि० ३।४०६। "सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी । विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वत ॥"–तत्त्वस० पृ० ६७ । प्रमाणस० पृ० १००। त० श्लो० पृ० १३। आत्मतत्त्ववि० पृ० ९४। (४)'प्रतिना' इति द्विर्लिखितम् ।

(अनन्त)विज्ञानातिशये अतीन्द्रियार्थग्रहणयोग्यतायां ज्ञानस्य। कस्य ? इत्याह–[आ] **शास्त्रार्थविदः** आ समन्तात् सकलस्य(सकलस्य)शास्त्रस्य वेदस्य वोदिः(र्वेदिः)शास्त्रस्य वा अर्थम् अतीन्द्रियं वेत्तीति तदर्थवित् सर्वज्ञः तस्य। कुतस्तदतिशयः ? इत्याह–**अक्ष कृत् सहाक्षा (असहायाक्षात्** अक्षा)भावात्। अथ अक्षाभावे कुतः स इति चेत् ?

५ अत्राह–**अ मादिति** आम्नायात् आगतात् दर्शनादेः। **जीवानाम्** इति निर्धारणे षष्ठी। यो हि विद्वान् स्वयं शास्त्रानुक्रम(मार्ग)मनन्यपूर्व जानाति स कथमन्यत्र असहा[या]क्षस्य ज्ञातरि विप्रतिपद्ये[ते]ति भावः।

नन्वतद्विषये यद्यपि कर्थं(विद्वान्) विप्रतिपद्यते, संसते(संशेते) अत्यन्ताप्रत्यक्षे 'अनन्त-ज्ञाने गत्यन्तराभावात्। तदुक्तम्–

१० *"अनिश्चया(य)मकर्तं प्रोक्तम् ईदृशानुपलम्भनम्।
तन्नैरा(ता)तीन्द्रियार्थानां सदसत्त्वादिविनिश्चयौ[²]॥"

[ प्र० वा० ३।१९४ ]

इति सौगतः, तत्राह–**स्थावरादेः** इत्यादि। स्थावरो वृक्षादिः आदिर्यस्य ज्ञाताप्रत्यक्ष पर्यन्तो यस्य तस्य। कस्य ? इत्याह–**जीवराशेः** अनेन 'जीवानाम्'इति [४१९क]व्याख्यातम्।

१५ **उत्तरस्योत्तरः** अधिकस्यापि अधिको बुद्धिप्रकर्षो यस्य स तथोक्तः तं प्रति न कश्चित् विप्रति-पत्तुमर्हति वक्ष्यमाणम् इति अन्यत्र क्षोद्योदनिरिष्यकात्। किंभूतात् ? इत्याह–**अविप्रकृष्ट** [विप्रकृष्टसंनीतिवादिना[²]] इत्यादि। स एव विप्रतिपत्तुमर्हति संशीतेर्विप्रतिपत्तिनिबन्धनत्वात्। अन्यः कस्मान्न विप्रतिपत्तुमर्हति इति चेत् ? अत्राह–**शास्त्रार्थविदां च** इत्यादि। च शब्दः अप्यर्थः, शास्त्रेण अर्थं विदन्तीति तदर्थविदः तेषामपि न केवलमन्येषां विवादगोचराणाम् तदर्थ

२० ज्ञानप्रकर्षः शास्त्रार्थज्ञानाधिक्यम् सर्वथा सर्वप्रकारेण अस्त्येव। स कुतः ? इत्यत्राह–**स्वभाव** इत्यादि। स्वभावेन पाटवं च अभ्यासश्च तौ आदी यस्य औपधाधिनेनादेः (संवनादेः) तस्य **तारग्यात्**(तारतम्यात्)। 'कथम्' इति प्रश्ने तस्य उत्तरम् **उपनिषच्च** इत्यादि। को हि नाम स्वयं शास्त्राय(र्थं)प्रतिपद्यमानः अन्यत्रापि(त्र वि)प्रतिपद्यते ? अनेन **'विद्वान्'** इति प्रतिपादितम्। तथैव तेनैव स्वभावपाटवाभ्यासादितारस्य(तारतम्य)प्रकारेण कस्यचित् पुरुष-

२५ विशेषस्य शास्त्रार्थनिरपेक्षं परोक्षज्ञानपाटवं यदि स्यात् किंविरुध्यत(किं विरुध्यत ?) न किञ्चित्। एतेन सर्वं निरूपितम्[³]।

तदनभ्युपगमे दूषणमाह–**तथा** इत्यादि। यतो जैमिन्यादेः प्राकृतात् वि(ताद्वि)शेषात् स्वत एव पुरुषनिरपेक्ष एव प्रमाण वेदो न स्यात् स्यादेव। ततः स्थितम्– यथा

(१) अतीन्द्रियपदार्थे। (२) "अनिश्चयकरं प्रोक्तं ईदृक्त्वानुपलम्भनम्। तन्नात्यन्तपरोक्षेषु सदसत्ता विनिश्चयौ॥–किन्तु ईदृगतीन्द्रियार्थविषयमनुपलम्भनमनिश्चयकरं प्रोक्तम् सत्त्वपरत्वे सम्भवात्। तत् तस्मात् अत्यन्तपरोक्षेषु सदसत्ताविनिश्चयौ न स्तः सत्त्वपि प्रमाणाभावे। प्रमाणनिवृत्तावपि अर्थाभावा-सिद्धेः॥"–प्र० वा० मनोरथ० ३।१९७। (३) "विप्रकृष्टविषया पुनरनुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा संशयहेतुः॥"–न्यायबि० ३।७ ।(३) वीक्षः। (५) तीक्ष्ण क्षोदीयः व्याख्यान इत्यर्थः।

एतदेव पर्यायेणाह–**सर्वात्मज्ञान** इत्यादि ।

**[सर्वात्मज्ञानविज्ञेयाज्ञेयतत्त्वं विवेचयन् ।**
**नो चेद्वेत्स्यति तस्य सर्वज्ञाभाववित्स्वयम् ॥१७॥**
**तज्ज्ञेयज्ञानवैकल्यात् यदि बुध्येत न स्वयम् ॥२॥**

५ **नहि पुरुषविशेषस्यापि वक्तृत्वादिसामान्यादसर्वज्ञत्वसाधनेऽपि समानमेतत्, विपक्षेऽभावासिद्धेः ]**

**सर्वे** स्थावरप्रभृतयः सकलजगद्वासिन **आत्मानो** जीवाः तेषां च यानि[**ज्ञानानि**] तत्र **विज्ञेयं** परिच्छेद्यम् **अज्ञेयं**(अज्ञेयम्) अपरिच्छेद्यं तत्त्व(त्त्वं) तद्विवेचयन् प्रत्यक्षेण जानन् योऽन्यस्य तत्राव्यापारादिति निरूपयिष्यते[४२८ख] मीमां[सकः] सर्वज्ञः स्यात्।
१० यथैव हि सर्वज्ञस्य ज्ञानं तद्विषयतत्त्वम्(यत्त्वं) वा जानता(ताऽजानतो) 'सर्वज्ञोऽयम्' इति ज्ञातु न शक्यते, तथा तेन (तज्ज्ञाने च) सोऽपि सर्वज्ञः, तथा सर्वात्मना(नां) तज्ज्ञानानां विशेषोपायेन(विषयायेन) तत्त्वस्य वा[अ]साक्षात्करणे पदेनाम(पदेष्व)नुमानादि प्रवृत्तिम् अन्यत्रदे स्वयमेव (अन्यत्र नेत्यज्ञानम्) कथं साकल्येन सर्वज्ञाभाववित् ? जानन् स एव सर्वज्ञ इति । तथा च *"धर्मे चोदनैव प्रमाणम्" *"नान्यत् किञ्चन इन्द्रियादिकम्" [शाबरभा०
१५ १।१।२] इति भाष्यं लभ्यते (लभ्यते) । सर्वज्ञत्वेन आत्मानं यदि स्वयमेव जानाति अन्योऽपि तथैव सर्वं तथा जानाति इति तद्विषयानुपलब्ध्यसिद्धो (लब्ध्यसिद्धा)। अतः कः ? सर्वज्ञसद्भावप्रमा- (च एव) अनेन ज्ञायते [इति] स एव दोषः । तथा यदि *"कल्पनीयाश्च सर्वज्ञाः" [मी० श्लो० चोदना श्लो० १३५] इत्यादि परपक्षेऽपि समानम् ।

किञ्च तेस्य ज्ञानं क्वचित् कदाचिद्यदि (कदाचिद् यदि) परिसमाप्तम् तावन्मात्रत्वम्
२० आत्मनां ज्ञानानां चेति प्राप्तमिति कथम् अनाद्यनन्तता तेषामिति च इदानीं वेदस्य(वेदस्य) अनाद्यनन्ततां प्रतीयात् ? ततः परं तत्पाठको वा ? अतः सैव संसाप्येव ? अथ तत्परिसमाप्तावपि न तेषां तावन्मात्रता" तर्हि तदपरिच्छिन्नस्वरूपाणामपि भावात्, न वा कार्त्स्न्ये किञ्चिज्ज्ञतासिद्धिः । यदि पुनर्न क्वचित् तत्परिसमाप्तमिष्यते न तर्हि बहुकल्पसहस्रैरपि 'सर्वात्मज्ञानविज्ञेयाज्ञे[य]तत्त्वविवेचनम्' च एव तेन अज्ञातः तत्रैव सर्वज्ञत्वप्रसङ्ग
२५ मात् (स) निवर्तते ।

यस्मात्सर्व(स्वात्मतम्) यथाभावमसौ प्रत्येति तेनाऽयमदोषः ; अन्योऽपि सर्वज्ञः (ज्ञ)

---

(१) प्रमाणस्य । (२) पुरुषेण । (३) "चोदनालक्षणोऽर्थो धर्मः"–मी० सू० १।१।२। "चोदनैव प्रमाणम्नोचेतद् धर्मेऽव्यभिचारित्वम्"–मी० श्लो० चो० सू० श्लो० ७। (४) "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयितुमलं नान्यत् किञ्चनेन्द्रियादिकम्" –शाबरभा० १।१।२ । (५) सर्वज्ञस्य । (६) अनधिगम्येत इति सम्बन्धः । ( ) वेदस्य । (८) सर्वज्ञज्ञानपरिसमाप्तावपि । (९) आत्मनां ज्ञानानां वा । (१ ) अपि तु तैरप्यज्ञातानामपि सद्भावात् । (११) अल्पज्ञत्वादिति हेतोः पर्यमाणप्रकरणम् इति वा सर्वज्ञताऽभावः साध्यते स न इति भावः ।

तथैव प्रत्येति इति तत्रास्य[४२९क]दोषा स्याद्भावात् । मयुक्तम् (दोषस्योद्भावनमयुक्तम् ।) एव-मन्यदपि परस्य दुश्चेष्टिता(तं) चिन्त्यम् । ननु स्यादयं दोषो यद्यसौ सर्वात्मज्ञानविज्ञेयाज्ञेय-तत्त्वं विवेचयेत्, यावता नैवमिति चेत्, अत्राह–**नो चेत्** न यदि धयेत् (**भवेत्**) **स्वयम्** आत्मनैव **सर्वज्ञाभाववित् कथं** नैव । निरूपितमेतत् । सर्वज्ञ(ज्ञा)भावावेदने च *"**धर्मे चोदनैव प्रमाणम्**" इत्यन्ययोगव्यवच्छेदेन[1] चोदनाप्रामाण्यसाधनमसारम् । ५

किंच, तदभावसन्देहे[2] वेदेऽकर्तृत्वं[3] सन्दिग्ध कथं प्रामाण्यं साधयेत्[4] यतः प्रवृत्तिकामोऽ-पौरुषेयाद् वचनात् ततः प्रवर्त्तेत ? सर्वज्ञस्य अस्मदाद्यदृश्य[स्य]तत्कर्तुः[5] सद्भावाशङ्काऽनिवृत्तेः । अस्मरणमपि तदभावं[6] न साधयति, स्मरणं हि अनुभवकार्यं न प्रमेयकार्यम्, अविशेषेण सर्वस्य[7] ततः तत्प्रसङ्गात् । [न]तदभावात्[8] प्रमेयाभावात्[9] प्रमेयाभावः, अन्यथा[10] धूना (धूमा)भावात् सर्वा-भावः स्यात् । किन्तु यदि स्यात्[11] तत्कारणस्य[12] अनुभवस्य स्यात् । न च अस्मदाद्यनुभवः १० सर्वप्रमेयकार्यः येन तदभावे[13] विवक्षितप्रमेयाभावः स्यात् । ततो वेदस्य[अ]कर्तृत्वमिच्छता [14]तदभावो ज्ञातव्य इति न प्रकृतदोषपरिहारः ।

अथ तदविवेचयन्नेव [15]तदभाव वेति (वेत्ति,) तत्राह–'**यदि**' इत्यादि । **तस्य** सर्वज्ञेयस्य (सर्वज्ञस्य) **ज्ञानं** तस्य **ज्ञेयं** तत्र **ज्ञानं** तेन **वैकल्यात्** सुतरा सर्वात्मनामसर्वज्ञत्वम् **स्वयं न बुध्येत** असर्वज्ञ इति । क्रम (कुतः ?) इत्यत्राह–**नहि** इत्यादि । गतार्थमेतत् । स्यादय दोषो १५ यदि सर्वात्मनामसर्वज्ञत्वम् अध्यक्षेण प्रतीयेत, न चैवम्[४२९ख]अनुमानेन तत्प्रतीतेरिति चेत्, अत्राह–**पुरुष** इत्यादि । **पुरुषस्यवि(रुषवि)शेषस्य(स्या)पि** सुगतादेरसर्वज्ञत्वसाधनेऽपि न केवलं प्रकृतसाधने । कुतः ? इत्याह–**वक्तृत्वादि** इत्यादि । सुगतरथ्यापुरुषस्यो (रुषयोः) यद् **वक्तृत्वादिसामान्यम् तस्मात्** । तत्र किम् ? इत्याह–**समानमेतद्** अनुमानमिति । [16]सर्वात्म-ज्ञानविज्ञेयाज्ञेयावेदने सर्वज्ञो(ज्ञे) **निपक्षे** वक्तृत्वाद्यभावासिद्धेः । शेषमत्र चर्चिते(चर्चितम्) २० चारुचक्षुषा स्वयमेवोपेण(मेवोह्यम्) ।

एव(एवं)परस्य सर्वज्ञताप्रतिपादने यत् फलं प्राप्तं तद्दर्शयन्नाह–**नर** इत्यादि ।

**[नरः शरीरी वक्ता वाऽसकलज्ञ' जगद्विदन् ।**
**सर्वज्ञः स्यात्ततो नास्ति सर्वज्ञाभावसाधनम् ॥१६॥**

सत्यपि पुरुषत्वादिसामान्ये यथा केचिदेव सर्वज्ञशून्यं जगत् तद्रागादिमत्त्वं वा २५ विदन्ति नेतरे तथैव यदि केचन सर्वज्ञाः स्युः किन्नोपपद्येत यतः सर्वज्ञो नैव स्यात् ?]

(१) वेदान्यस्मिन्-सर्वज्ञे योगस्य-प्रामाण्यसम्बन्धस्य य व्यवच्छेदोऽभाव तेन रूपेण । (२) सर्वज्ञाभावे सशये सति । (३) कर्त्रभावोऽपि । (४) वेदस्य । (५) वेदकर्तुं । (६) कर्त्रभावम् । (७) जैनादिकस्यापि । (८) स्मरणाभावात् । (९) 'प्रमेयाभावात्' इति द्विर्लिखितम् व्यर्थम् । (१०) अकार्यादपि यदि अकारणस्य अभाव स्यात्तदा । (११) यदि स्मरणाभावादभाव स्याद् । (१२) स्मरणकारणस्य । (१३) अनुभवाभावे । (१४) सर्वज्ञाभाव । (१५) सर्वज्ञाभावम् । (१६) असर्वज्ञत्वे साध्ये ।

नर[ ]पुरुषः शरीरी वक्ता वा सकलज्ञासकलज्ञ किञ्चिज्ज्ञस्याजगद्विषत्तु(वा असकलज्ञम् , किञ्चिज्ज्ञ जगद्विषन्) सर्वज्ञ स्यात् ततो नास्ति सर्वज्ञाभाव साधनम् , तत्साधनस्य तेन व्यभिचाराद् इति भावः ।

कारिकां विवृण्वन्नाह–सत्यपि इत्यादि । सत्यपि न केवलम् असति पुरुषत्वादिसा

५ मान्ये यथा केचिद्‌ग सर्वज्ञशून्य जगत् जै मि न्या द यो विदन्ति, कस्य(वस्य)सुगतादे रागादिमत्त्व वा परात्मस्य विदन्ति नेतरे रथ्यापुरुषाः तथैव यदि सर्वज्ञ(ज्ञा)केचन स्युः किन्नोप[प]द्येत यताऽनुपपत्तेः सर्वज्ञ(ज्ञः) नैव न कश्चित् स्यात् ।

ननु स्यादयं दोषो यदि प्रत्यक्षेण जगत् तथा विदन्ति केचन , किन्तु अनुमानेन । तथाहि–सर्वात्मज्ञानादि(नानि)प्रत्यक्षाणिमतानि विवादगोचरतां गतानि, इन्द्रियार्थसन्निकर्षजानि

१० नियतविषयाणि वा(वा),तत्त्वात् , अस्मदादीनोत्पन्नज्ञानत्वं(दादीन्द्रियप्रत्यक्षज्ञानवत्)। तथा विषया विवादविषयाः[४३०८]प्रतिनियतार्थेन्द्रियाप्राह्यविषयाः, तत्त्वात् , विवक्षितविषयवत् । तदुक्तम्(तदप्युक्तम्–)

* 'यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
दृष्टं संप्रति लोकस्य तथा कालान्तरेऽप्यभूत् ॥''

१५ [मी०श्लो० चोदना०श्लो० ११३]

इति चेत् न सत्यस्वप्नेन अस्य व्यभिचारात् । *''यदि सत्यस्वप्नज्ञानम् इन्द्रियार्थसंसृष्टं व्यवहितं चायमर्थमिति'' इति प्र मा ण सं ग्र हे निरूपितम् ।

तर्हि बाधकवत् साधकस्यापि सम्भवाभा(सम्भवेऽभा-)वात् संशय इति चेत् तत्रेदमाह–साधक इत्यादिना ।

२० [साधकबाधकाभावात् सर्वज्ञे संशयः कश्चित् ।
बाधकासम्भवात् सिद्धं साधकस्यैव संभवात् ॥१७॥

केन तद्विषयस्याभावनिर्णयः ? तत्र बाधकाभावनिर्णयात् । तत एव प्रत्यक्षस्यापि प्रामाण्यम् । यथादर्शन तत्प्रतिपत्तौ अतिप्रसङ्गात् । तत्र साकल्येन बाधकप्रमाणाभावा दृष्टेरन्यत् साधकं नाम, यतस्तस्य साधकबाधकप्रमाणाभावात् सर्वज्ञत्वं संशीतिमवतरेत् ।

२५ साधकबाधकयोरन्योन्यं विधिप्रतिषेधलक्षणत्वात् ।]

अत्र दूषणमाह–बाधकासंभवादि[त्यादि] । कश्चित् पुरुषविशेषे सर्वज्ञत्वं सिद्ध(द्धम् ।) कुतः ? इत्याह–बाधकाऽसंभवात् । अनेनैतत् कथयति–बाधकाभावः परमार्थसत्त्वेन व्याप्तः सुखादिस्वसंवेदनेन तथादर्शनात् परमार्थ त(स)त्त्वाभावे च मायामरीचिकादिनिरूपणाकाय(मायामरीचिप्रभृतिनिरूपणाकार)बाधकाभावनिवृत्तेः । यन्निवृत्त्या यन्नियमेन निवर्तते तत्तेन व्याप्तम् यथा

(१) जैमिन्यादयः । (२) प्रत्यक्षत्वात् । (३) विषयत्वात् । (४) यदाहितम् । (५) 'स्वप्ने प्रबुद्धवद् अवर्तमानोऽपि इन्द्रियैरर्थमुपलभते तथा सत्यम् ।''–प्रमाणसं० पृ० ११ । (६) ''साधकबाधकप्रमाणाभावात् सर्वज्ञे संशयोऽस्तु इत्ययुक्तम्.....''–प्रमाण० पृ० १९ ।

ज्ञानत्वं स्वसंवदेनेन, निवर्तते च [1]तत्सत्त्वनिवृत्तौ [2]तदभाव इति।

स्यान्मतम्–[3]तत्सत्त्वाभावेऽपि स्वप्नादिदृष्टघटादौ [4]तदभावा[त्]न तेन[5] [6]तद्व्याप्तिरिति, तत्तत्(तन्न)स्वसंवेदनग्राह्याकारयोरविशेषप्रसङ्गात तदाकारनिवेदनात्। ततः स्वप्नादिग्राह्याकारस्य असत्त्वमिच्छता त[द्]बाधकसद्भावोऽभ्युपगन्तव्यः।

अपरे मन्यन्ते–प्रागभावादौ तत्रासंबंध(सत्तासम्बन्ध)रहिते तत्सत्त्वाभावेऽपि बाधकप्रमाणाभावः इति नानयोः[8] व्याप्यव्यापकभाव इति, तन्न, भावाद् भिन्ने[ऽ]भावे बाधकसतस्य(संभवस्य)दर्शितत्वात, सत्तासम्बन्ध वा(न्धे च)। ततो य[त]त्र बाधकासंभवाद् भावनिश्चयः तत एव तत्र[४३०ख]शब्देहम्बवदतः (सन्देहं वदन्तः) मूढमतय इति।	५

ननु न तत एकेन[9] तत्स्वरूपात केवलात् कचित् सर्शीतिरिष्यते, अपि तु साधकाभावसहितात्। साधकप्रमाणात्मको हि बाधकाभावो भाव गमयति। न च सर्वज्ञे सोऽस्तीति चेत, अत्राह–'सावकस्यैवं(साधकस्यैव)संभवात्' इति व्यतिरेचको[11] नियतोऽय(निपातोऽय[12]) 'सिद्धम्' इत्यस्याऽनन्तरं द्रष्टव्यः। साधकस्य संभवात् क्वचित् सर्वज्ञत्वं सिद्धे सच(सिद्धमेव) तत्संभवो दर्शितो नेह पुनरुपदर्श्यते। यदि च(वा) आत्मनः सकलपदार्थसाक्षात्कारी कस्यचिद् (कश्चिद्)अवस्थाविशेषः समस्तीति श्रौती बाधकरहिता प्रतीतिः तत्साधकं प्रमाणमिति।	१०

यत्पुनरुक्तं धर्मकीर्तिना–*"साधकबाधकप्रमाणाभावात्तर्हि सन्देहोऽस्तु" [13]इति, तत्राह–केन प्रमाणेन तद्द्वयस्य साधकबाधकप्रमाणद्वयस्य अभावनिर्णयः न केनचिद् इति निवेदितमेतत्। एवं मन्यते–सर्वज्ञे हेतोः सन्देहसाधनम्, हेतुना[च] सिद्धेन भवितव्यम्, अन्यथा [14]ततः [15]तत्साधनायोगात्, सन्दिग्धासिद्धा(द्ध)वचनप्रसङ्गादिति।	१५

ननु मा भूत् [16]तद्द्वयाभावनिर्णयः, सन्देहो भवद्वि(त्वि)ति चे[त्,] तत[17] एव [18]तत्र सन्देहः स्यात् न तद्द्वयाभावात् इ[ति। अस्तु] तत एव सन्देह इचिंति(इति) चेत्, अत्राह–बाधक इत्यादिना। [त]त्र शब्दः क्रमवाची, तन्न तत्सन्देहात्[त]त्र सन्देह इति भावः। तथापि तत एव तत्र सन्देह(हः) चेत्, अत्राह–तत एव इत्यादि। बाधकाभावनिर्णयादेव। कुतः? इत्याह–प्रत्यक्षस्यापि, न केवलम् आगमस्य[४३१क] तत एव प्रामाण्यं य[तः] इति।	२०

स्यान्मतम्–प्रतिभासात तत्प्रमाण्य न [19]त[तः] इति, तत्राह–यथादर्शनम् इत्यादि।

---

(१) परमार्थसत्त्वनिवृत्तौ। (२) बाधकाभाव। (३) परमार्थसत्त्वाभावेऽपि। (४) बाधकाभावात्। (५) परमार्थसत्त्वेन। (६) बाधकाभावव्याप्ति। (७) परमार्थसत्त्वाभावेऽपि। (८) बाधकाभावपरमार्थसत्त्वयो। (९) बाधकाभावात्। (१०) केवलेन। (११) व्यावर्तक। (१२) एवकार। (१३) तुलना–"साधकबाधकप्रमाणाभावमात्र चात्र सन्देहेन लक्ष्यते।"–प्र० वार्तिकाल० ४।९१। "सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धि विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्थया एकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम्।"–न्यायवा० ता० टी० पृ० २४७। न्यायकुसु० स्त० २ पृ० ८। "साधकबाधकप्रमाणयोर्निर्णयात् भावाभावयोरविप्रतिपत्ति अनिर्णयादारेका स्यात्।"–अष्टश० अष्टस०, पृ० ४९। लघी० स्ववृ० पृ० २। प्रमाणनय० १।११। प्रमेयरत्नमा० ३।२९। प्र० मी० पृ० ५। (१४) हेतो.। (१५) सर्वज्ञसन्देहसाधनायोगात। (१६) साधकबाधकाभावद्वय। (१७) साधकबाधकाभावसन्देहात्। (१८) सर्वज्ञे। (१९) बाधकभावनिर्णयात्।

(तर्हि न सर्वज्ञे धर्मिणि [1]तन्निवृत्तेस्तत्सद्भावेन[2] व्याप्तिः) साध्यते किन्तु सपक्षे सुखादौ। [3]तत्र[न] [4]तत्सत्त्वमिति चेत्, यदोपित (घटादावपि न) शब्दाऽनित्यत्वम्। [5]अत्र अनित्यत्वसामान्येन[6], अन्यत्र सत्त्वसामान्येन व्याप्तिरिति समानम्। एवमर्थं चोक्तम्–'प्रत्यक्षस्यापि' इत्यादि।

नन्वेवं वहिर्व्याप्तिरुपसिता (रुपदर्शिता) स्यात्। तव (न च) एतावता[7] हेतोगम (हेतोर्गमक)-त्वम्, [8]तत्पुत्रत्वादेरपि गमकत्वप्रसङ्गात्, अन्तर्व्याप्तेः [9]तस्य गमकत्वोपगमात्, [10]सा च धर्मिणि गृह्यते। न चैतन्न निवृत्ते र स्ता (न चैतत् तन्निवृत्तेरस्ति इ) ति चेत्; अत्राह–सती इत्यादि। सर्वदे दि (सर्वविदि) धर्मिणि बाधकस्य निवृत्तिः सर्वविदः सत्तां साधयेत् नात्र साध्ये सशयः 'कार्यः' इत्यध्याहारः। अन्यथा चक्षुरादिविषयेऽपि सत्तासन्देहः स्यात्। बाधकनिवृत्तेः अन्यस्य [11]तल्लक्षणस्याभावा[त्, अ]दर्शनमात्रस्य व्यभिचारात्। ५

ननु इदमनुमानम् [12]तदन्तरबाधितविषय (य) कथं साध्यसाधकमिति? तथाहि–नास्ति सर्वज्ञा (सर्वज्ञः) [४३२क]सुनिश्चितासंभवत्साधकप्रमाण त्वातरा (णत्वात्। तदाह–) न वै इत्यादि। कस्यचिदर्प्य ह (कस्यचिदपि अर्ह) तोऽन्यस्य वा सर्वज्ञस्य अभावे अङ्गीक्रियमाणे बाधकप्रमाणमेव न स्यात् उक्तविधिना सर्वज्ञस्य इति किन्तु अपि तु तस्याभावे साध्ये साधकप्रमाणं च न स्यात् साधकप्रमाणाभावः स्यादिति। न वै नैव सर्वज्ञाभावे साधक-प्रमाणाभावस्य निश्चेतुमशक्तेः, तस्य तदन्तरस्य वा तत्साधकप्रमाणस्य भावात्। तदभावान्नेति चेत्, कुतः [13]तदभावः? अन्यत इति चेत्, अस्य वैफल्यम्। अत इति चेत्, अन्योऽन्य-संश्रयः–सिद्धे तदभावे साकल्यैंतदसा (ल्येन तत्सा) धक प्रमाणं न स्यादिति स्यात्भवे (साधक-प्रमाणाभावे) च तदभावसिद्धिरिति यत्किञ्चिदेतत्। १० १५

उपसंहरन्नाह–तत् तस्माद् इयं बाधकप्रमाणव्यावृत्तिरेव नान्यत्। किं कृता? इत्याह–निश्चिता सती। किं करोति? इत्याह–सर्वज्ञ इत्यादि। साधकव्यावृत्तिः तदभावं कुतो न साधयति? इत्याह–साधकव्यावृत्तेरसंभवात् सर्वज्ञाभावे तन्निर्णया[संभवा]द् इति भावः। विपक्षे बाधकं दर्शयन्नाह–प्रमेयान्तरस्यापि सुखादिरूपस्य न केवलम् अशेषवित्प्रमेयस्य भत्त्वं परपार्श्वतत्त्वम् (सत्त्वं परमार्थत्वम्) अबाधितविज्ञानज्ञेयत्वादेव, [14]दर्शितमात्रस्य व्यभिचारि-त्वात्। अर्थक्रियाकारणादिति चेत्, न, तदप्रतिभासने ततः तदिति स्वपा (निश्चयाऽ) योगात्। प्रतिभासनेऽपि उक्तम्। अबाधितप्रतिभासात् तद्व्यवस्था, अन्यत्र समाना। एतेन अर्थक्रियातः तदिति निरस्तम्, अनवस्था च तत्रापि तदन्तरापेक्षणात्। सत्तासम्बन्धात्[15] इत्येके, मरीचिका-तोये शक्रतो (तत्कुतो) न? बाधनादिति चेत्, पतितोऽसि[४३२ख]मदुपदिष्टो धर्मन्य च मर्थी-(ष्टे धर्मे इत्येवमर्थं) चैवकारकरणम्। २० २५

(१) बाधकनिवृत्ते। (२) सर्वज्ञसद्भावेन। (३) सुखादौ। (४) सर्वज्ञसत्त्वम्। (५) शब्दा-नित्यत्वे साध्ये। (६) व्याप्तिरिति चेत्,। (७) सपक्षे बहिर्व्याप्तिमात्रेण। (८) गर्भस्थो मैत्रतनय श्यामो भविष्यति मैत्रतनयत्वात् इत्यादे। (९) हेतो.। (१०) अन्तर्व्याप्ति। (११) सत्तालक्षणस्य। (१२) अनु-मानान्तर। (१३) सर्वज्ञाभाव। (१४) दर्शित दर्शनविषयीभूतम् एतावन्मात्रेण प्रमाणत्वं नेति भावः। (१५) सत्त्वम्।

स्यान्मतम्–असाधितविशेषणमहेतुत्वम् अप्रोपविदि असिद्धम , इत्यत्राह–तदसाधितसाध्ये पक्षम् अस्ति सर्वज्ञे अपि, यतार्थमेतम् । तन्न सूक्त(क्तम्–) *"साधकबाध[क]प्रमाणाभावा त्तत्र संशय" इति ।

दूषणान्तरमात्र(मत्रै)व दर्शयन्नाह–साधन(धक) इत्यादि । साधकप्रमाण सर्वज्ञविषयं ५ ज्ञानम् साधकं प्रमाणं तदभावविषय तत् तदभावे तद्विषयज्ञानरहितत्वे अङ्गीक्रियमाणे संशयोऽपि मा भूत् । नहि धर्मिमात्रस्याप्यग्रहणे से युक्तः । निदर्शनमाह–नैरात्म्यवत् पक्षस्ये इव तद्वत् ।

ननु सर्वज्ञानम् आत्मार्थीनं पक्षस्य तदभावात् कथं तदिति चेत् ? अत्राह–सुत इत्यादि । पूर्वं सौगतं परं मीमांसकं प्रति । एतेन धर्म्यसिद्धिर्निरस्ता । परमन्यत्र वक्ष्यमस्ति इति दर्शयन्नाह–इत्यलं प्रसङ्गेन इति ।

१० ननु सत्यपि सर्वज्ञे कथम् अर्हन्नेव सर्वज्ञो नेतरः ? तदुक्तं सुगतम् ।

*"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः ॥"

[तत्त्वसं० श्लो० ३१४९ पूर्वपक्षे] इति ।

एतदेव दर्शयन्नाह–सत्यपि इत्यादि ।

१५ [सत्यपि स्वानुभूतस्य तत्त्वमेका न्तवादिनः ।
अलक्षयन्त कल्प्येरन् सर्वज्ञाः किं परीक्षकैः ॥१०॥]

तत्रोत्तरमाह–एकान्तवादिन इत्यादि । सुगतादयः तत्त्वं स्वरूपमलक्षयन्तोऽनि-रिचवयन्तः । कस्य ? स्वात्म(स्वानुभूतस्य) वस्तुनः सुखादिनीलादेः अनेकान्तात्मनोऽनुभूतस्य एकान्तरूपतया कथनात् कल्पेरन्(कल्प्येरन्)सर्वज्ञ।(ज्ञाः) किं परीक्षकैः ? नैव।

२० स्यान्मतम्–परचेतोवृत्तीनां दुरन्वयत्वात् कथमवगम्यते 'तदलक्षयन्तः' इति ? अन्यथा मिथ्यात्व[४ । २१क] दूरलक्षितोऽस्त्यन्ति (दु विप्रलम्भन्ति) मायाः ।

तत्रापि–

[सर्वस्यैव सतः सिद्धा स्थित्युत्पत्तिव्ययात्मनः ।
कस्यचित् कथञ्चिदनुभूता वृत्तिरन्यतमात्मनः ॥२०॥

२५ उत्पत्तिरात्मलाभः, स्थितिः [सत्त्वम्], नाशः पुनः स्वभावप्रच्यवनम् च, एतद् पर स्परं कार्यात्मकं कथम् ? अपरिणामिनोऽपि तावत् क्षणिकस्य कालान्तरस्थायिना सार्धस्य यो यदात्मा यथाभूतः स त सदैव लभते । न च व्यात्मव्यतिरेकेण उत्पत्तिः स्थितिर्विपत्तिर्वा युज्येत द्रव्यान्तरव्यावृत्तिलक्षणत्वात् स्वस्वभावस्थितेः । परिणामिनश्चा र्थस्य सतः पूर्वस्वभावप्रच्युतिरेव पुनः स्वभावान्तरप्राप्तिः । परिणामिकारणस्य स्वकार्या-

(१) ज्ञानम् । (२) संशयः । (३) पक्षान्तवत् इत्यर्थं कस्यचित् स्वस्य सुगतम् इत्यर्थं । (४) धर्म्यभावे । (५) मति । (६) द्वितीयम् । ( ) 'सुगतम्' इति चिह्नान्तर्गतं पुनर्लिखितम् ।

त्मविवर्तं प्रत्यन्यानपेक्षणात् । पूर्वस्य वैकल्यम् उत्तरस्य वैकल्यम् । सतो द्रव्यस्य दृश्यं मध्य-रूपं कथञ्चित्तसदेव, अन्यथा ''सर्वथा '। स्वसन्तानपतितमुत्तरपरिणाममप्राप्नुवतः परोपकारासंभवात् । सकल ''। परस्परप्रवर्तननिवर्तनाभ्यामन्वयव्यतिरेकलक्षणत्वादन्योऽन्यं द्रव्याणाम् । तदन्ते क्षयदर्शनात् पूर्वमपि क्षयमिच्छन् मध्ये स्थितिदर्शनात् पूर्वापरकोट्योरपि स्वभावस्थितिं निश्चेतुमर्हति अविशेषात् । दृश्यादृश्याद्यात्मकमेकम् प्रत्यक्ष- ५ परोक्षवत् उद्भूतरूपस्पर्शादिपुद्गलवत् । प्रत्यक्षस्वभावस्यैव कथञ्चिदनुमेयतोपपत्तेश्च । नहि तद्विरुद्धम् ; संवित्तेरपि अभावप्रसङ्गात् । तन्मिथ्यैकान्ताभिनिवेशवन्तः ''किंच उत्तरत्र निपेत्स्यमानत्वात् । ]

ननु (ननु) अनेकान्तात्मकत्ववत् एकस्य प्रतिक्षणं स्थित्युत्पत्तिव्ययात्मकत्वम् , न च मन्या (मण्या) दीना (ना) तथोत्पत्तिव्ययौ, चरमध्य (मान्त्य) क्षणानां च स्थितिः प्रतीयते इति चेत् , १० अत्राह–**सर्वस्यैव** इत्यादि । **सर्वस्यैव** न नियतस्य चेतनेतरवर्गस्य **सतो** विद्यमानस्य, हेतुपदमेतत् । किंभूतस्य ? इत्याह–**स्थित्वि(त्यि)**त्यादि । तस्य किम् ? इत्याह–**सिद्धा** निश्चिता । का ? इत्याह–**वृत्तिः** । किंभूता ? **उद्भूता** । किं सर्वत्र सर्वथा ? **न** इत्याह, **क्वचित् कथञ्चिद्** इति स्थित्युत्पत्तिव्ययाना मध्ये **अन्यतमात्मनः** अन्यतमस्वभावस्य मन्य दौ (मण्यादौ) स्थित्यात्मनः संसारिजीवादौ त्रयात्मनः । १५

कारिकां व्याख्यातुं पूर्वपक्षयन्नाह–**उत्पत्तिः** इत्यादि । **उत्पत्तिः** प्रादुर्भावः । का ? इत्याह–**आत्मलाभः** आत्मनः स्वरूपस्य[लाभः], प्रागसतो न कारणसमवायः सत्तासमवायो वा इति भावः । तथाहि–पूर्वं स्वतः सतश्चेत् समवायः उत्पत्तिः , आत्मादिविभुत्वादीना च स्यात् । असतश्चेत् , शशविषाणादीना[2] भवेत् । पूर्ववत् पश्चादपि [3]तेषामसत्त्वात् नेति चेत् , किमिदं तदसत्त्वम् ? तत्सम्बन्धाभावश्चेत् , सोऽपि कुतः ? अभावाच्चेत् , अन्योऽन्यसंश्रयः– २० तथाहि–सिद्धे तदभावे तत्सम्बन्धत्वाभावः, तस्माच्च तदभाव इति । कारणाभावात् [4]तदभावे इदमे[व] वक्तव्यम् । तद्यथा कुतः तत्कारणाभावः ? अत्यन्ताभावरूपत्वात् । तदीप कुतः ? कारणाभावात्[5] , अन्योऽन्यसंश्रयैः । कथं[४३३ख] व (च) प्रध्वंसाभावो विद्यमानः ? यतो मुद्गरादिसाफल्यम् । नहि तस्य[स]मवायि-असमवायिकारणमिष्यते । 'निमित्तकारणमस्ति' इति चेत , इतरत्र([6]इतरन् नेति) कुतः ? अदर्शनादिति चेत् , [7]तत एव बुद्धिशब्दादीनाम् अत्यन्तभिन्नम् २५ आत्माकाशादि समवायिकारणं न स्यात् । नहि तदुपलभ्यते यथोपवर्ण्यते परेण । निराधारतां स्यात् चेत् , अस्तु, को दोषः ? नि (नी) रूपता इति चेत् , न , प्रध्वंसेन व्यभिचारात् । गुणत्वाभावश्चेत् , किमिद गुणत्व नाम ? स्वरूपमेव इति नोत्तरम् , प्रध्वसेतिपि (सेऽपि) प्रसङ्गात् । एतेना (न) गुणत्व (त्वं) चिन्तितम् । द्रव्याश्रितत्वम् इति चेत् , तदपि कुतः ? गुणत्वादिति तु भा (दुर्भा) षितम् , अन्योऽन्यसश्रयात्–गुणत्वे तदाश्रितत्वं ततो गुणत्वमिति । ३०

---

(१) प्रतिक्षणम् । (२) शशविषाणादीनाम् । (३) शशविषाणादीनामभावे । (४) इति चेत् , । (५) कारणाभावे अत्यन्ताभावरूपता सिद्ध्यति, तस्याश्च कारणाभाव इति । (६) समवायिकारणम् असमवायिकारण च कुतो न ? (७) अदर्शनादेव । (८) शब्दादीनाम् । (९) द्रव्याश्रितत्वम् ।

स्यान्मतम्—प्रबाधितविज्ञानज्ञेयत्वम् अशेषविदि असिद्धम् इत्यत्राह—तदबाधितज्ञानज्ञेयत्वम् अस्ति सर्वज्ञेऽपि, गतार्थमेतत् । तन्न सूक्त(क्तम्–) *"साधकबाध[क]प्रमाणाभावात् तत्र संशयः" इति ।

दूषणान्तरमात्र(मत्रै)व दर्शयन्नाह—साधन(धक) इत्यादि । साधकप्रमाणं सर्वज्ञविषयं ज्ञानम् बाधकं प्रमाणं तदभावविषयं तत् तदभावे तद्विषयज्ञानरहितत्वे अङ्गीक्रियमाणे संशयोऽपि मा भूत् । नहि धर्मिमात्रस्याप्यग्रहणे से युक्तः । निदर्शनमाह—नैरात्म्यवत् पञ्चत्वे इव तत्र ।

ननु सर्वज्ञानम् आत्माधीनं पञ्चत्वं तदभावात् कथं तद्विति चेत् ? अत्राह—सुग इत्यादि । पूर्वं सौगतं परं मीमांसकं प्रति । एतेन धर्म्यसिद्धिर्निरस्ता । परमप्यत्र वक्तव्यमस्ति इति दर्शयन्नाह—इत्यल प्रसङ्गेन इति ।

ननु सत्यपि सर्वज्ञे कथम् अर्हन्नेव सर्वज्ञो नेतरः ? तदुक्तं सुगतम् ।

> *"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
> तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः ॥"
>
> [तत्त्वसं० श्लो० ३१४९ पूर्वपक्षे] इति ।

एतदेव दर्शयन्नाह—सत्यपि इत्यादि ।

> [सत्यपि स्वानुभूतस्य तत्त्वमेकान्तवादिनः ।
> अलक्षयन्तः कल्प्येरन् सर्वज्ञाः किं परीक्षकैः ॥१९॥]

तत्रोत्तरमाह—एकान्तवादिन इत्यादि । सुगतादयः तत्त्वं स्वरूपमलक्षयन्तोऽनिश्चिन्वन्तः । कस्य ? स्वात्म(स्वानुभूतस्य) वस्तुनः सुखादिनीलादेः अनेकान्तात्मनोऽनुभूतस्य एकान्तरूपतया लक्षणात् कल्पेरन्(कल्प्येरन्)सर्वज्ञः(ज्ञाः) किं परीक्षकैः ? नैव ।

स्यान्मतम्—परेषामागमानां दुरन्वयत्वात् कथमवगम्यते 'तदलक्षयन्तः' इति ? अन्यथा मिथ्याना[४३२क] मूलनिर्माणान्त्यपि (द्द विप्रलम्भन्ति) भाषा ।

तत्रापि—

> [सर्वस्यैव सतः सिद्धा स्थित्युत्पत्तिव्ययात्मनः ।
> कश्चित् कथञ्चिदनुभूता दृष्टिरन्यतमात्मनः ॥२०॥]

उत्पत्तिरात्मलाभः, स्थितिः [सत्त्वम्], नाशः पुनः स्वभावप्रच्यवनम् च, एतत् परस्परैकात्म्यकं कथम् ? अपरिणामिनोऽपि तावत् क्षणिकस्य कालान्तरस्थायिनो वार्थस्य या यदात्मा यथाभूतः स च सदैव लभते । न च व्यात्मव्यतिरेकेण उत्पत्तिः स्थितिर्विपत्तिर्वा युज्येत द्रव्यान्तरस्याप्रविलक्षणत्वात् स्वस्वभावस्थितः । परिणामिनश्चार्थस्य सतः पूर्वस्वभावप्रच्युतिरेव पुनः स्वभावान्तरप्राप्तिः । परिणामिकारणस्य स्वकार्या

(१) ज्ञानम् । (२) संशयः । (३) धर्म्यग्रहणम् इत्यर्थः कदाचित् स्यात् ग्रहणम् इत्यर्थं । (४) धर्म्यग्रहणे । (५) इति । (६) द्वितीयम् । ( ) 'सुगतम्' इति विरर्थकं पुनर्लिखितम् ।

त्मविवर्तं प्रत्यन्यानपेक्षणात् । पूर्वस्य वैकल्यम् उत्तरस्य वैकल्यम् । सतो द्रव्यस्य दृश्यं मध्यरूपं कथञ्चित्सदेव, अन्यथा ''सर्वथा'''। स्वसन्तानपतितमुत्तरपरिणाममप्राप्नुवतः परोपकारासंभवात् । सकल ' । परस्परप्रवर्तननिवर्तनाभ्यामन्वयव्यतिरेकलक्षणत्वादन्योऽन्यं द्रव्याणाम् । तदन्ते क्षयदर्शनात् पूर्वमपि क्षयमिच्छन् मध्ये स्थितिदर्शनात् पूर्वापरकोट्योरपि स्वभावस्थितिं निश्चेतुमर्हति अविशेषात् । दृश्यादृश्याद्यात्मकमेकम् प्रत्यक्ष- ५ परोक्षवत् उद्भूतरूपस्पर्शादिपुद्गलवत् । प्रत्यक्षस्वभावस्यैव कथञ्चिदनुमेयतोपपत्तेश्च । नहि तद्विरुद्धम् ; संवित्तेरपि अभावप्रसङ्गात् । तन्मिथ्यैकान्ताभिनिवेशवन्तः''' किंच उत्तरत्र निपेत्स्यमानत्वात् । ]

ननु (नन्) अनेकान्तात्मकत्ववत् एकस्य प्रतिक्षणं स्थित्युत्पत्तिव्ययात्मकत्वम्, न च मन्या (मण्या)दीना (ना) तथोत्पत्तिव्ययौ, चरमध्य (मान्त्य)क्षणाना च स्थितिः प्रतीयते इति चेत्, १० अत्राह–**सर्वस्यैव** इत्यादि । **सर्वस्यैव** न नियतस्य चेतनेतरवर्गस्य **सतो** विद्यमानस्य, हेतुपदमेतत् । किंभूतस्य ? इत्याह–**स्थित्वि(त्य)**त्यादि । तस्य किम् ? इत्याह–**सिद्धा** निश्चिता । का ? इत्याह–**वृत्तिः** । किंभूता ? **उद्भूता** । किं सर्वत्र सर्वथा ? **न** इत्याह, **क्वचित् कथञ्चिद्** इति स्थित्युत्पत्तिव्ययाना मध्ये **अन्यतमात्मनः** अन्यतमस्वभावस्य मन्य दौ (मण्यादौ) स्थित्यात्मनः ससारिजीवादौ त्र्यात्मनः । १५

कारिका व्याख्यातु पूर्वपक्षयन्नाह–**उत्पत्तिः** इत्यादि । **उत्पत्तिः** प्रादुर्भावः । का ? इत्याह–**आत्मलाभः** आत्मनः स्वरूपस्य[लाभः], प्रागसतो न कारणसमवायः सत्तासमवायो वा इति भावः । तथाहि–पूर्वं स्वतः सतश्चेत् समवायः उत्पत्तिः, आत्मादिविभुत्वादीना च स्यात । असतश्चेत्, शशविषाणादीनां भवेत । पूर्ववत् पश्चादपि तेषामसत्त्वात नेति चेत्, किमिदं तदसत्त्वम् ? तत्सम्बन्धाभावश्चेत्, सोऽपि कुतः ? अभावाच्चेत, अन्योऽन्यसंश्रयः– २० तथाहि–सिद्धे तदभावे तत्सम्बन्धत्वाभावः, तस्माच्च तदभाव इति । कारणाभावात् तदभावे इदमे[च] वक्तव्यम् । तद्यथा कुतः तत्कारणाभावः ? अत्यन्ताभावरूपत्वात् । तदपि कुतः ? कारणाभावात्, अन्योऽन्यसंश्रयः । कथं[४३३ख] व (च) प्रध्वसाभावो विद्यमानः ? यतो मुद्गरादिसाफल्यम् । नहि तस्य[स]मवायि-असमवायिकारणमिष्यते । 'निमित्तकारणमस्ति' इति चेत, इतरत्र(इतरन् नेति) कुतः ? अदर्शनादिति चेत्, तत एव बुद्धिशब्दादीनाम् अत्यन्तभिन्नम् २५ आत्माकाशादि समवायिकारणं न स्यात् । नहि तदुपलभ्यते यथोपवर्ण्यते परेण । निराधारता स्यात् चेत्, अस्तु, को दोषः ? नि (नी)रूपता इति चेत्, न, प्रध्वंसेन व्यभिचारात् । गुणत्वाभावश्चेत्, किमिदं गुणत्व नाम ? स्वरूपमेव इति नोत्तरम्, प्रध्वंसेतिपि (सेऽपि) प्रसङ्गात् । एतेना (न) गुणत्व (त्वं) चिन्तितम् । द्रव्याश्रितत्वम् इति चेत्, तदपि कुतः ? गुणत्वादिति तु भा (दुर्भा)षितम्, अन्योऽन्यसंश्रयात्–गुणत्वे तदाश्रितत्वं ततो गुणत्वमिति । ३०

(१) प्रतिक्षणम् । (२) शशविषाणादीनाम् । (३) शशविषाणादीनामभावे । (४) इति चेत्, । (५) कारणाभावे अत्यन्ताभावरूपता सिद्ध्यति, तस्याश्च कारणाभाव इति । (६) समवायिकारणम् असमवायिकारण च कुतो न ? (७) अदर्शनादेव । (८) शब्दादीनाम् । (९) द्रव्याश्रितत्वम् ।

यत्पुनरेतत्–"बुद्ध्यादि गुणः निषिध्यमानद्रव्यकर्मभावत्वे सति सत्तासम्बन्धित्वात् रूपादिवत्" इति, तदपि न सुन्दरम् प्रध्वंसेन व्यभिचारात्। न व्यभिचारः तस्य [सत्ता]सम्बन्धित्वाभावादिति चेत् न तस्य सत्तासम्बन्धोऽपि[भवतु]दोषाभावात्। कथमन्यथा 'प्रध्वंसः सन्' इति प्रत्ययः ? औपचारिक इति चेत् कुत एतत् ? तत्सम्बन्धाभावात्(मा-
५ वात्त्वेन तद्)पि कुतः ? तत्प्रत्ययस्य औपचारिक[त्वाच्च]त् अन्योऽन्यसंश्रयः। अथ प्रध्वंसे सत्प्रत्यय उपचरितो 'द्रव्यादिविषयउपचरितो' द्रव्यादिविषयत्वे सति तत्प्रत्ययत्वा[त्] सामान्यादिविदिति तद्विषयत्वं कुतः ? तत्प्रत्ययोपचारात् पुनः अन्योऽन्यसंश्रयः। अथ न प्रध्वंसो [द्रव्यादीनामन्यतमोऽन्याश्रितत्वेनाप्रतीतेश्च(न्यतमः, अन्याश्रितत्वेनाप्रतीतेः। अ)त एव बुद्ध्यादिरपि[४३४ क]न स्यादिति तदेव आवर्तते इति चक्रकप्रसङ्गः।
१० स्यान्मतम्–प्रध्वंसतात्(प्रध्वंसे सत्ता)सम्बन्धे अभावत्वं हीयते इति, तस्योत्पादे अर्थक्रियाकारित्वे वा कुतो न हीयते ? ततो यथा तद्विरोधेऽपि तन्न हीयते तथा तत्सम्बन्धाविरोधेऽपि इति सर्वं सुस्थम्।

किञ्चित्(किञ्च) तत्सम्बन्धाभेदेऽपि यदि द्रव्यादीनां भावाभावभेदः [अभावोऽपि]भिन्न[ः] स्यात, अर्थान्तरसामान्यस्य अभावेऽप्यपि निषेद्(धु)मशक्यत्वात्। अन्यथतत्र(अन्यथा तत्र
१५ अ)भावप्रत्ययाभिधानानुगमा दुर्लभो भवेत्। तन्न बुद्ध्यादीनां गुणत्वं प्रध्वंसवदिति न समवायिकारणसिद्धिः।

अथ बुद्ध्यादेः का[दा]चित्कत्वं समवायिकारणं गमयति तदपि प्रध्वंसेन व्यभिचारि। 'भावत्वे सति' इत्यपि न सुन्दरतरम् प्रध्वंसवत् भावस्यापि कस्यचित तथोत्पत्त्य(त्त्य)विरोधात्, विशेषत्वाद् भावत्वभावानाम्। अथ बुद्ध्यादेः समवायिकारणाभावे कुतः उत्पत्तिः ?
२० प्रध्वंसवत् निमित्तकारणात् किन्न स्यात् ? इतरथा प्रध्वंसस्यापि न स्यात्। निर्हेतु प्रध्वंसभावे न कारणाभावप्रयुक्त [ःकार्याभाव] इति चेत् सौगतत्वे(सोऽपि कुतः ?)अभावत्वादिव(दि)ति चेत्, उक्तमत्र। अपि च 'पटादीनां कारणं सत्तासम्बन्धो वा 'अस्ति' इति कुतः ? स्वरूपेण सत्त्वे तदपि वेदितं चेत् स्वस्य(सत्वेति स्वरूपसत्त्व)भावात्रम्। समयमपि नेति चेत् पदार्थान्तरं तथाविधं किन्न स्यादतः(त् ? यतः) पदार्थसंख्यानियमो व्यवतिष्ठेत। अदर्शनादिति चेत् अन्यत्र समानम्।
२५ तस्मात् 'आत्मलाभ उत्पत्तिः' इति।

विवृतिमाह स्थि[ति]रित्यादिना। पुनः इत्यादिना सं(नाश)स्वभावत्वेन[४३४ ख] भावा[द्]भिन्नं स्वास्थं(नाशं)प्रतिषेधयति अध्यायनम् इत्यनेन सतः विरोभावम्, निरूपितं चैतत्। एतत् उत्पत्त्यादित्रयं परस्परस्य अन्योऽन्यस्य एकार्थ आत्मा स्वभावो यस्य तत्तथाक्तम्।

(१) तुलना–"गुणः शब्दो द्रव्यकर्मान्यत्वे सति सत्तासम्बन्धित्वात् रूपादिवत्।" –प्रश० व्यो० पृ० ६७९। (२) सत्त्विति प्रत्ययस्यौपचारिकत्वे तत्सम्बन्धाभावाभावः, तद्विरह तत्प्रत्ययस्यौपचारिकत्वमिति। (३) 'द्रव्यादिविषय उपचरितो' इति पुनर्लिखितं व्यर्थम्। (४) सत्प्रत्ययस्य द्रव्यादिविषयत्वम्। (५) चेत्,। (६) चेत्,। (७) 'भावत्वे सति कादाचित्कत्वात्' इति। (८) समवायिकारणाभावेऽपि। (९) प्रतिषेधति।

'कथम्'इत्येतत् कारिकाव्याख्यानेन परिहरन्नाह–अपरिणामिनोऽपि इत्यादि । अपरिणामिनोऽपि इत्यादि । अपरिणामिनोऽपि न केवल परिणामिनः, तावत् शब्दः भावनायाम् । कस्य ? इत्याह–अर्थस्य । किंभूतस्य ? क्षणिकस्य कालान्तरस्थायिनो वा नित्यस्य इत्यर्थः । तस्य किम् ? इत्याह–र्यो (यो) यस्य क्षणिकस्य नित्यस्य आत्मा स्वभावो यथाभूतः क्षणिको नित्यो वा सोऽर्थस(र्थः त)मात्मानं सदैव लभते कदाचिन्नेति नायं विभागः अन्यथा सर्वत्र ५ सर्वदा क्षणिकम् आत्मादिवं वा नित्यं तस्या (न स्यात्) । तथा त्तया (तदा) त्मकोऽप्यर्थः 'तं सदैव लभते' इति भावः ।

स्यादेतदेवम् यात्म (यदात्म) कोऽर्थः स्यात् करणवसेत् (कारणवशात्) कदाचित् प्राप्तेः इति चेत्, अत्राह–नचेत्यात्म्य (न च इत्यादि । 'त्र्यात्म्य') त्र्यात्मकत्व तस्य व्यतिरेकोऽभावः तेन उत्पत्तिः नहि । उत्पत्तिस्वभावरहितं खरविषाणादि कारणाभावादनुत्पत्तिमत् न घटादिर्विप[2]- १० र्ययादिति चेत, उक्तमत्र ।

किं च, सदधि (सदपि) कारणम अनुत्पित्सुस्वभावं नोत्पादयति, अन्यथा [3]अविनश्वर (२) विनाशयेत । न कस्यचिदुत्पत्तिरिति चेत, उक्तमत्र चक्रादिवैफल्यम् इति । तथा [4]तद्व्यतिरेकेण न स्थितिः । न खलु स्थितिस्वभावरहितं[5] कुतचित स्थाव न (कुतश्चित स्थापन) मर्हति । नहि [5]कर्म दत्तफलम [४३५ क] ईश्वरेणापि स्थापयितु शक्यधि (शक्यमिति) *"कार्यविरोधि" १५ [वैशे० १।१।१४][6]इत्यस्य विरोधात् । अथ ईश्वरस्य तत्स्थापनशक्तिः नास्ति, [7]अन्यत्र कथम् ? अन्यथा [8]उभयरूपता ईशस्य । यथा वा[ऽ]शक्तो न स्थापकः तथा स्थितिशक्तिरहितो न कुतश्चित् तिष्ठति इति समानम् । एतेन स्थापने तद्वा (तद्व्यव) स्थापि निरस्ता ।

ननु न स्थितिस्वभावताप्रयुक्ता स्थितिः, तस्यामपि विनोशुत्यय (विनाशप्रत्यय) प्रणिधाने[9] घटादेर्विनाशदर्शनादिति चेत्, न, तस्य[10] विनश्वरस्वभावत्वात् । सर्वदा कुतो न नाशए २० (नाशमे) ति चेत ? क एवमाह–ने तीति ('न एति' इति) ? केवलं तिरोधाना[द्]नुपलक्षणं [11]सुवर्णे उष्णस्पर्शवत । कारणभेदात् कदाचित्की श[क्ति]स्तु विनाश (शेऽपि) इति स्थितिस्वभाव एव तिष्ठति ।

तथा तद्व्यतिरेकेण विपती र्व्य (विपत्तिर्वा) विनाशो वा न युज्येत । नहि तत्स्वभावरहितस्य सामान्यधर्मपक्षस्य (धर्मवत् कस्य) चित् कुतश्चित् विनाशः । न विनाश इति चेत्, कपालादौ[12] घटादिदर्शनप्रसङ्गः । तिरोधानान्नेति चेत्, तदस्थास्य (तदवस्थस्य) [13]तदयोगाव (त) । २५ एतदेव दर्शयन्नाह–द्रव्य इत्यादि । स्वेद्रव्यादिन्योनेद्रव्यादुपः (स्वद्रव्यादिभ्योऽन्ये द्रव्यादयः) तदन्तराणि तेभ्यो व्यावृत्तिः लक्षणं यस्य तस्य भावात् तत्त्वात् 'वस्तुनः' इत्यध्याहारः ।

---

(१) त्र्यात्मनो भाव त्र्यात्म्यम्, उत्पादादित्रयात्मकत्वमित्यर्थः । (२) कारणसद्भावात् । (३) नाशस्वभावरहितम् । (४) त्र्यात्मकत्वव्यतिरेकेण । (५) रहितम् इत्यर्थ । (५) अदृष्टं धर्माधर्मादि । (६) 'कार्यविरोधि कर्म'–कर्म स्वकार्येण फलेन विरुध्यते विनाश्यते इत्यर्थ । (७) तन्वाद्युत्पादने । (८) शक्ताशक्तरूपता । (९) सन्निधाने । (१०) घटादे । (११) तेजोद्रव्यात्मके सुवर्णे उष्णस्पर्शानुद्भवो यथा । (१२) घटविनाशानन्तरसमुद्भूतखर्परादौ । (१३) तिरोधानायोगात् ।

एतदपि कुतः ? इत्याह–स्वेत्यादि । स्वेन स्वभावेन स्थितेः सर्वभावानाम् , अन्यथा सर्वात्मकम् अनाद्यनन्तं च सत्(र्वं) स्यात् इति भावः । तदुक्तम्–

*"सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् ।
असदेव विपर्यासात् न चेन्न व्यवतिष्ठते ॥"

५ [आप्तमी० श्लो० १५] इति ।

ननु स(स्व)स्वभावस्थितिः [४३५ख] क्षणिकेष्वेव भावेषु । तथा चोक्तम्–*"सर्वे भावाः स्वभावेन" [प्र० वा० ३।३९] इत्यादि इति चेत् अत्राह–परिणामिन इत्यादि । पु(च) इत्यवधारणे परिणामिन एव अर्थस्य त स्थिते(तत्स्थितेः) 'सदैव(व)लम्बते' इति । कुत एतद् इति चेत् ? अत्राह–सतो विद्यमानस्य पूर्वस्वभावप्रच्युतिरेव सौगतेन इष्यमाणा पुनः

१ पश्चात् स्वभावान्तरप्राप्तिः । यदि वा, तत्प्राप्तिरेव तत्प्रच्युतिः न पुनरन्यः प्रध्वंसः । तत्र यदा उत्तरकार्यमनन्तरं भवति तदा भवतु एतत्, यदा काले न भवति वा तदा कथमिति चेत् ? अत्राह–'परिणामि' इत्यादि । परिणामिकारणस्य उपादानकारणस्य स्वका[र्या]त्मना यो विवर्तः तं प्रत्य[न्या]नपेक्षणा[त्] तत्प्रच्युतिरेक(रेव)तत्प्राप्तिः ।

स्यान्मतम्–न तत्प्राप्तिरेव तत्प्रच्युतिः किन्तु भिन्नो[ऽ]भाव इति चेत् अत्राह–पूर्वस्य

११ वैकल्यम् अभावः उत्तरस्य कैवल्यम् पूर्वाकाररहितता परस्य न तयोः(तस्यैः) प्रध्वंसः । यदा (तद् यदा) काले न भवति वा तदा कथमिति चेत् ? अत्राह–परिणामीत्यादि । परिणामिकारणस्य उपादानकारणस्य स्वका(र्या)त्मनो यो विवर्तः तं प्रत्य[न्या]नपेक्षणात् तत्प्रतीतिः (तत्प्रच्युतिरिति) । तर्हि पूर्वापराकारविनाशोत्पादमात्रं स्थितिः इति प्रसक्तमिति चेत् अत्राह–न च इत्यादि ।

१० निगमयन्नाह–तदुत्पाद इत्यादि । तत् पूर्वं तदात्मकभावा(कम् अतो) नानवस्था पर्योरिव । अत्र मतं यत्र निरन्तरं सम(रूप)त्वं कल्पते[त]त्र स्थितिमितिपरिरस्तु, यत्र मध्यरूपमेवं तत्र [४३६क]कथमिति चेत् ? अत्राह–सत इत्यादि । सतो द्रव्यस्य रूपं यत् मध्यरूपं तद् पूर्वापरकोट्योरनुपलम्भम् सदेव कथञ्चित् न सर्वात्मना । कुतः ? इत्याह–अन्यथा तदसत्त्वप्रकारेण । शेषं सुगमं(सुगमम्) । कुतः ? इत्यत्राह–सर्वथा इत्यादि ।

२५ यदि मतम्–पूर्वं तत्र सत्प्रसूतिः(सतस्तु असतः) कारणोत्पत्तिविरोधात् , पश्चात् कुतः ? [इत्याह] स्वस्(स्वसन्तान) इत्यादि । स्वसन्तानपतितम्(पतितम्) उत्तरपरिणाम मुपायेषय (उपायेक्षणम) प्राप्नुवतः सत[ः]परोपका[रासंभया]त् विजातीयकार्यकारणा(करणा) संभवात् । तथा [ऽ]रूपनाम् रसात् रूपानुमानाभावप्रसङ्गात् । मा भूत् तत्राप्युपकारः इत्यत्राह–सकल इत्यादि । कुत(कुतः) इदमवगम्यते तत्परिणाममप्राप्नुवतः तदुपकारासंभवः ? इत्याह–परस्पर

(१) इतरेतराभावाभावे सर्वात्मकम् प्रागभावाभावे–तत्स्वरूपाद्ये अनादि प्रध्वंसाभावाभावे अनन्तं स्यादिति भावः । (२) बौद्धः । (३) तत्प्राप्तावस्थान्तरप्राप्तिरेव । (४) पूर्वस्वभावप्रच्युतिः । (५) तत्किंच विज्ञप्तिमिति तत्कः पूर्वोत्तरभावाभावी । (६) उपकल्प्यते । ( ) कारणानुत्पत्तिविरोधात् नाविद्यमानस्य । (८) सत् । (९) अन्यथा ।

इत्यादि। परस्परम् अन्योन्यं प्रवर्त्तनं समर्थरूपेण उत्पादनं प्रवृत्तिः असमर्थरूपेण निवर्त्तनं निवृत्तिः ताभ्याम् अन्वयः अनुग्रामो (अनुगमः) व्यतिरेको व्यावृत्तिः तावेव लक्षणं यस्य तस्य भावात् तत्त्वात्। कस्य ? इत्याह–अन्योऽन्य इत्यादि। केषाम् ? इत्याह–द्रव्याणाम् इति। तथा अन्यदा दर्शनादिति भावः।

एवं सति यत् सिद्धं तद् दर्शयन्नाह–तद् इत्यादि। यत एवमनन्तरं संवृत्तं [तत् त]स्मात् अन्ते विसदृशकार्योत्पादकाले कार्यानुत्पादसमये वा क्षयदर्शनात् द्रव्याणा पर्य्येपि क्षयंतिष्ठि कृत् (पूर्वमपि क्षयमिच्छन्) सौगतो मध्ये स्थितिदर्शनात् पूर्वापरकोट्योः अधि (अपि) स्वभावस्थिति निश्चेतुमर्हति। अथ अत्र प्रमाणबाधनम् तत्पूर्वत्र (न पूर्वत्र), इत्याह– अविशेषादिति। मध्ये व्यवस्थितिदर्शनमुक्तमिति नेहोच्यते। ५

ननु दृश्यादृश्यस्वभावयोर्भेदात् [४३६ख] कथमेकं दृश्येतररूपमिति चेत् ? अत्राह– दृश्य इत्यादि। आदिशब्देन चलितेतरादिरूपपरिग्रहः। अत्र निदर्शनमाह–प्रत्यक्ष इत्यादि। निरूपितमेतत–*"चित्ते विषयनिर्भासविवेकानुपलम्भतः" [सिद्धिवि० १।२०] इत्यादिना। १०

वैशेषिकादिकं प्रति निदर्शनमाह–उद्भूत इत्यादि। [उद्भूतानुद्भूतौ]रूपस्पर्शौ आदी येषा गन्धादीना ते तथोक्तात, दूमू (क्ताः, उद्भू )तानुद्भूता(त)रूपस्पर्शादयो यस्य युगलोत्रा- (पुद्गलस्य, अत्रा)न्यपदार्थः,[2] तस्येव तद्वदिति। तथाहि–पृथिव्यां रूपादयः सर्वेऽपि सामान्येन उद्भूता दृश्याः, विशेषापेक्षया तु उभयथा विभत्ति (भवन्ति) अप्सु गन्धोऽनुद्भूतो नेतरे[3], तेजसि गन्धरसौ[4], वायौ स्पर्श एव उद्भूतः। १५

अथ जलादौ गन्धादयः सत्ता (सन्तः इ)ति कुतः प्रतीतिरिति चेत् ? स्पर्शवत्त्वात् पृथि[वी]वत्। अन्यत्र नजा (तज्जा)तीये उद्भूतिः स्यादिति चेत्, न, पृथिव्या तद्भावाद् अदोषात्। कथं तस्याः तज्जातीयत्वम् ? कथं हेमजातीयत्वम् ? हेमजातीयत्वम् अग्नेः तेजोद्रव्यत्वात्[5], 'पुद्गलत्वात्' इति समानम्। कथ तत्र ? होत्रि (हेम्नि) कथं तेजस्त्वम् ?[6] नहि अपरं तत्र त्सामाहाति (तत्साधकमस्ति) विवादाभावप्राप्तेः। उपदेशसहायादिन्द्रियात् तत्प्रतिपत्तिः पुद्गलत्वेऽपि समान (ना)। भासुररूपदर्शनात्र (नात् तत्[8]) तत्रानुमीयते, अनुमीयता यदि अस्य अव्यभिचारः स्यात्। न चैवम्, पीतत्वागन्वनिर्नल (पीतत्वस्य निर्मल) मसृणपाषाणमर्दिते वस्त्रे तद्दर्शनात्। तथा स्पर्शदर्शनात् पुद्गलत्वमनुमीयता[म]विशेषात्। इतश्च पुद्गलद्रव्यविशेषा भूम्यादयः परिणामपरिग्रहदर्शनात्, जलादेः [४३७क] मुक्ताफलादिभावादिव (भावात्। एव) मर्थं च 'पुद्गलवत्' इत्युक्तम्। २० २५

गुणिना (नां) गुणाना [च]भेदात् न तद्दृश्येतरत्वा स्या (त्वात्मकत्वं) दृश्यते इति चेत्, न, अस्य पक्षस्य[9] निषेधात्। भेदेऽपि प्रतिभासमानगुणसम्बन्धिनैव (तैव) दृश्या नेतिरेति (नेतरेति) स एव प्रसङ्गः।[10] तस्या अपि दृश्यत्वे सकलगुणग्रहः,[11] तदभावे तत्सम्बन्धिताऽग्रहणात्, अन्यथा दृश्य- ३०

(१) स्थितिपक्षे। (२) बहुव्रीहिसमास इत्यर्थः। (३) रूपरसस्पर्शा। (४) अनुद्भूतौ। (५) इति चेत्,। (६) तेजस्त्वम्। (७) सुवर्णे। (८) भासुररूपादे। (९) गुणगुणिनोर्भेदैकान्तस्य। (१०) इतरगुणसम्बन्धिताया। (११) गुणग्रहणाभावे।

मानगुणग्रहणेऽपि तत्सम्बन्धिताप्रतीतिः [न स्यात्] । स्यादिति(?)-चेतोपि (सोपि अन्यैवादि) चेत् कथं तस्य ? सम्बन्धात्चेत अन्या तत्सम्बन्धिता पुनरपि अन्या पुनरपि अन्या इत्यनवस्था । ततो दृश्येतरात्मकम् एकं युक्तम् ।

'तत्रैव युक्तं' तत्रैव युक्त्यन्तरमाह–प्रत्यक्ष इत्यादि । प्रत्यक्षः स्वभावो यस्य धर्मिणो
५ तस्यैव, नान्यस्य धर्मिणोऽसिद्धेः अनुमेयतोपपत्तेश्च 'दृश्यादृश्यादि' इत्यादिना सम्बन्धः ।

ननु तत्स्वभावस्य किमनुमेयत्वेनेति(मत्येनेति चेत् अ)त्राह–कथञ्चित् सर्वात्मना न क्षणक्षयादिरूपेण तत्स्वभावस्य [1]तदनुमानवैफल्यापत्तेः । अनिश्चितनिश्चया[त्मना]-त्मनेति चेत् स एव दोषः–उभयरूपता इति । समारोपव्यवच्छेदोऽपि निश्चितोत्तर[ः] ।

ननु दृश्यस्वभावकाले अन्यस्याग्रहणे कथं तयोरेकत्वम् युक्तो ([2]युक्तो) त्वन्यपदार्थान्तरवादिति
१० चेत् ? अत्राह–नहि इत्यादि । कुतः ? इत्यत्राह–संवित्ति (त्तेः) इत्यादि । न केवलं बहिरर्थ सम्बन्धि (बहिःसम्बन्धे) रपि तु [संवित्तेरपि] ज्ञानमात्रस्यापि अभावप्रसङ्गात् । [3]क्षणिकत्वोपर कार्यकारणत्वाप्रतिभास (से) सर्वाप्रतिभासनात्, सर्वस्य विभ्रममात्रे समवसान (समावसाने न) किञ्चित् कचित् युक्तम् । एव (एवं) दृश्य [त्वादृश्यस्य] विरुद्धधर्माध्यासेन [४१७ ख] असत्त्वात् अन्यस्याप्रतिभासेनासत्त्वात् नैकस्य दृश्येतररूपतेति चेत् अत्राह–तन्मिथ्यैकान्त इत्यादि ।
१५ तत् संवित्तिमात्रमपि मिथ्येति यत्सम् (योऽयम्) एकान्ताभिनिवेशः तस्य तः (तदन्ताः) स्वग (सुग) तास्तो गृह्यन्ते । शेषं सुगमम् । किंच इत्यादिना दोषान्तरमाह–तत्रोत्तरं तु (उत्तरम) सुगतस्य निषेत्स्यमानत्वात् ।

वैशेषिकादि (दिं) निराकुर्वन्नाह–सत (सत्स) प्रयोग [ज] त्वेन इत्यादि ।

[सत्सम्प्रयोगजत्वेन विरुद्धा सकलज्ञता ।
२० प्रागसकलज्ञस्य कुतः पश्चादित्यस्य साऽन्यतः ॥२१॥

आत्मेन्द्रियमनोऽर्थसन्निकर्षात् कथं निरवशेषज्ञानम् ? सत्यपि तपःप्रभावे इन्द्रियाणां सम्प्रयोगानतिक्रमात् नियतविषयत्वात् । अथात्ममनसोऽदृष्टवशात् बहिरर्थसन्निकर्षविशेषकल्पनायाम् युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गं न भवेत् ।]

ननु नित्यमपि तस्य ज्ञानमस्ति, तेन किं सा[ऽ]विरुद्धा येन तत्र दूषयितुं मासाद्यते ?
२५ मा चेत् तर्हि तदाशङ्कनीयम् । अथ ईश्वरनिराकरणे तन्निरस्तमिति नाशङ्क्यते तर्हि क्षणिकनिरंशवस्तुनिषेधेन [4]अन्यस्यापि निषेधा[त्त]दपि नाशङ्कनीयम् । प्रपञ्चार्थमिति चेत्, नित्यमपि तथैव इति चेत् न तदभावात्[5] । सता हि भावस्य धर्मेण भवितव्यं नासतः । तदभावः

(१) युगपत्सम्बन्धितापि । (२) 'तत्रैव युक्तं' इति भाष्यं युक्तिविषयम् । (३) अन्यथा तदभावात् भावाभावयोः स्यादिति भावः । (४) विरुद्ध । (५) क्षणिकत्वं च कार्यकारणत्वं च तयोरप्रतिभासे । (६) "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।"–न्यायसू० १।१।१६ । (७) ईश्वरस्य वैशेषिकस्य वा । (८) सकलज्ञता । (९) विरुद्धा चेत् । (१०) युगपज्ज्ञानस्यापि । (११) नित्यज्ञानाभावात् ।

कथमिति चेत ? प्रमाणाभावात् । न तत्र प्रत्यक्षम्[1], अतीन्द्रिये[2] तदवृत्तेः । नानुमानम् , लिङ्गाभावात् । न ज्ञानत्वं लिङ्गम , अस्मदादिज्ञानेन व्यभिचारात् ।

एतेन 'विभुद्रव्यविशेषगुणत्वे सति विभुत्ववत्' इति निरस्तम् । सर्वविषयत्वे सति इति चेत् , न, इतरयोगिज्ञानेन[3] । 'सर्वदा तद्विषयत्वे सति' इ[ति] चेत , यदि तस्यैव तदेव साध्यं तदेव हेतुविशेषणम् इत्यसार परस्या(स्य) नित्यत्वम । न चात्र निदर्शनम् । ५

स्यान्मतम्–'ईश्वरज्ञानं नित्यं[सत्त्वे]सति धर्मादिकारणाजन्यत्वात् [त]द् विभुत्ववत्' इति । न चेश्वरस्य धर्मादिरस्ति, तत्कारणाभावात् । न च [4]परधर्मादेः तद्विज्ञानम् ,[४३८ क] आत्मगुणानाम आत्मान्तरगुणाकारणत्वादिति । किं पुनः ईश्वरज्ञान न किंचित् करोति ? तथा चेत् , कुतोऽशेषकार्यजन्म ? महेश्वराच्चेत् , न , बुद्धिनिरपेक्षस्य पुंसः कार्यव्यापारे अचेतनकर्मणोऽविशेषः[5] । सत्यपि बुद्धिः अनुपयोगिनी । अथ पदार्थग्रहणे [न]तज्जन्मनि[6], सर्वस्यापि बुद्धेः तत्रैव[7] व्यापारो न कार्यजन्मनि, इति 'इद बुद्धिपूर्वम् , इदमथा(मन्यथा)कार्यम्' इति व्यवहारविलोपः । अथ '[8]तत्सहितेन पुंसा कृतम्'इति उपचारेण 'बुद्धिकृतम्' इत्युच्यते , [9]तयापि तत्करणे को विरोधः ? १०

किं च, यदि नान्यात्मगुणः अन्यात्मगुणनिमित्तं कथं मन्त्रिण(णो)ध्यानाद् अन्ययोषितः तं प्रति प्रत्यो(प्रत्याकर्षणम् ?)अन्यमन्त्रोऽपि(मन्त्रेऽपि)आत्मन एव तच्च(तद्वे)तुत्वमिति चेत् , न, धर्मादेः सर्वत्रानुपयोगापत्तेः, आत्मन एव उपयोगात् ।अथ मन्त्रिणो ध्यानं चित्तविकारकारणम् , ईश्वरज्ञानमपि तथैव स्यात् । भवतु को दोष इति चेत् , तद्वद् अन्यधर्मादिः [10]तत्कारणम् इति कारणाभावोऽसिद्धः । तन्नानुमानमत्र[11] । १५

ननु यथा भवदीये मते सर्वज्ञः तेन[12] तदन्तरेण[13] वा ज्ञायते, तथा मदीये तदेव ज्ञानम् आत्मनित्यत्वमत्रेति तदन्तरे स्वोत्([14]तदन्तराभावादिति) चेत् , न, एकत्वसंवेदनतापत्तेः, ईश्वरकल्पनमनर्थकम् , तावतैव[15] तत्प्रयोजनसिद्धेः । [16]यथा ज्ञानत्वाऽविशेषेऽपि तदेव नित्य तथा गुणत्वाविशेषेऽपि तदेव[17] अनाश्रयम इति । [18]अन्यत्र अनित्यानित्यत्वा(अनित्यत्वनित्यत्व)[19]दर्शनद्वयम् । एकत्र उक्तो दोषे(षः)अन्यत्र[सत् ]सम्प्रयोगजत्वेन इत्यादिकः ।[४३८ ख]तन्न नित्य ज्ञानम् इत्यवगिष्यते । २०

तत्र **सता** अर्थेन **सम्प्रयोगः** सन्निकर्षः इन्द्रियाणा तज्जत्वे **न** ज्ञानस्य **विरुद्धा सकलज्ञता** कु मा रि लो क्ताऽशेषदोषापरिहारात् इति भावः । दूषणान्तरमाह–**नित्यस्य** आत्मनः **सर्वज्ञता कुतः** कारणात् ? न कुतश्चित् , नित्यत्वविरोधात् । स्वभाविकी सा[20] २५

(१) प्रमाणम् । (२) नित्यज्ञाने । (३) व्यभिचारात् । (४) आत्मान्तर । (५) विशेषाभाव । (६) कार्योत्पादे व्यापार । (७) पदार्थग्रहणे एव । (८) बुद्धिसहितेन । (९) बुद्ध्यैव । (१०) ईश्वरज्ञानोत्पत्तिकारणम् । (११) प्रमाणम् । (१२) स्वेन । (१३) सर्वज्ञान्तरेण । (१४) ईश्वरज्ञानान्तराभावात् । (१५) ज्ञानमात्रेणैव । (१६) ननु निराश्रय ज्ञान कथं स्यादित्याशङ्कायामाह । (१७) ईश्वरज्ञानमेव । (१८) ज्ञानसामान्ये । (१९) द्वौ विकल्पौ इत्यर्थः । (२०) सकलज्ञता ।

इति चेत्; अत्राह—कुतः प्रमाणात् 'अवगम्यते' इत्यध्याहारः। आत्मस्वभावस्य उत्कर्षेण तथा दर्शनात्।

ननु कारणेन भिन्न(न्नो)ज्ञान[म]शेषविषयं जन्यते, तत्सम्बन्धात् [1]तस्य [2]सा इति चेत्, अत्राह—असकलज्ञस्य तस्य प्राक्, पश्चात्काले उत्पन्ने [3]सा कुतः? नहि स्वयम् अर्थ-
५ ग्रहणाभिमुख्यरहितस्य अन्यतः तद् युक्तम्।

कारिकां विवरीतुमाह—स्वस्य (आत्म) इत्यादि। आत्मा च इन्द्रियं च मनश्च अर्थश्च तेषां सन्निकर्षात् संयोगादिरूपात् कथं निरवशेषज्ञानम् इत्य(ति) यावत्। तपःप्रभावात्, निरवशेषविषयं ततोऽपि ज्ञानमिति चेत्; अत्राह—तपःप्रभाव इत्यादि। तपसः प्रभावः सामर्थ्यां(र्थ्यं) विशेषः तस्मिन् सत्यपि न केवल[म]क्षि[इन्द्रियाणां]सम्प्रयोगानतिक्रमात्
१० विज्ञानस्य। नहि तत्र सति ज्ञानं प्रयोगनिरपेक्षम् परमतसिद्धेः। यदि च (वा,) 'इन्द्रियाणाम् तत्प्रयोगानतिक्रमात्' इति व्याख्येयम्। न खलु तस्मिन् सति इन्द्रियाणि सत्सम्प्रयु-(क्त)मर्थं[न] गृह्णन्ति तैरेव सन्निकर्षसाधकहेतुमो व्यभिचारप्रसङ्गात्। अथ 'असमग्रादिवत्' तस्य च (ख)र्थमप्ये(वे)ति तत्प्रभावरहितत्वे[४३९ क]सति इन्द्रियत्वात् स्वलक्षणवत्'[इति चेत्;] न तद्रहितत्व(त्वाऽ)सिद्धे[ः], [4]जन्मान्तरे तदनिषेधात्। 'यस्य यावती मात्रा' विशेषण-
१५ त्वात् हेतोरगमकत्वात् अतिप्रसङ्गात्। अथ [5]तत्प्रभावात् इन्द्रियाणि तथाविधानि जायन्ते याति (जायन्ते येन) सर्वविषये गति(गतिः) संपद्यते; तत्राह—नियत इत्यादि। नहि स्पर्शनादि[6] तत्प्रभावतः शरीरं विहास(विहाय) प्रतिविषयं भ्रमति, तेन सह भ्रमणे तस्य सर्वगतत्वम्। चक्षूरश्मीनां सर्वत्र गमनेऽपि रूपस्यैव तस्य ग्रहणं स्यात् न रसादेः। तेनैव[7] तस्यापि[स्पर्शे] इतरेन्द्रियवैफल्यम्। तत्राह—नियत इत्यादि। मानसं योगिनो[ऽक्षे]परोक्षमुच्य(प्रत्यक्षम्)
२० न चक्षुरादिवदिति चेत्; अत्राह—मनसः इत्यादि। मनसः अणो[ः]सकृ[दा]द् बहिरर्थ सवि[शे]षवेदनकल्पनायां कुतः? इत्याह—[अ]दृष्टवशात् धर्मादिसद्[भा]वात् केवलस्य वस्तुविशिष्टवेदनकारण(णाऽ)सामर्थ्यात् अतीतादी(दौ) तन्मानससंविदिविषये(वदिति) वचनम्।

ननु स्वप्नादिप्रत्ययानां मनस एव वैशद्यमिति चेत्; अन्येषामपि स्यात् तदविशेषात्। अपि च, तत एव योगिनोऽशेषार्थज्ञानवैशद्ये सर्वस्य स्यात(स्यात्, त)स्य सम्ब[न्ध]सम्बन्ध-
२५ स्य(स्याऽ)भेदात्[8]। न चैवम्, अतोऽप्रसङ्गमेयम्। तस्याम् [किम्?] इत्यत्राह—युगपज्ज्ञान इत्यादि। सर्वेन्द्रियविषयसन्निधानेऽपि या युगपज्ज्ञानानामनुत्पत्तिः सा मनसो भिन्नम् न भवेत्। तद्वैशद्यवत्[9] [10]तदनुत्पत्तेरपि अदृष्ट प[व भा]वादिति भावः।

एतदेव दर्शयन्नाह—['तनु' इत्यादि]

---

(१) विस्तरस्यात्मनः। (२) सर्वज्ञता। (३) सर्वज्ञता। (४) सन्निकर्षनिरपेक्षम्। (५) जन्मान्तरीततपसः संभावना वर्तते इति भावः। (६) तपःप्रभावात्। (७) चक्षुषैव। (८) रसादेरपि। (९) आत्मना मनः संयुक्तम् तेन च सर्वेऽर्थाः इति परम्परासम्बन्धस्य। (१०) भेदाभावात्। (११) सर्वार्थवैशद्यवत्। (१२) युगपज्ज्ञानानुत्पत्तेरपि।

[तद्वैचित्र्याच्च केषाञ्चित् स्याद्युगपत्संविदन्यथा ।
स्मृतीनां युगपदुत्पत्तिः सत्यपीत्थं प्रसज्यते ॥२२॥
तदात्मसन्निकर्षस्य चाणोस्तेनानपेक्षिणा ।
प्रदेशतद्वद्व्यतिरेकात् स्यादवस्तुत्वमित्यतः ॥२३॥
तद्व्यतिरेकवतः कोऽर्थः षट्पदार्थप्रवादिनः । ५
तेषामन्येन मनसा वा संयोगः कुतो यतः ॥२४॥
द्रव्यातिरेकाद्विभागश्च स्मृतिः स्यात्कदाचित् ।
न चात्मत्वं समवेतं प्रदेशेषु तदात्मनः ॥२५॥
भेदप्रसङ्गात्प्रत्यात्मं सन्निकर्षान्नाप्यनात्मनः ।
प्रदेशतद्वतोर्भेदे नार्हन्त्यात्मनि सुखादयः ॥२६॥ १०

आत्ममनोऽक्षार्थसन्निकर्षाद्बहिरर्थज्ञानोत्पत्तौ युगपज्ज्ञानोत्पत्तिः किन्न भवेत् ? मनसामेकत्वे एकैव बुद्धिः स्यात् । प्रत्येकमेकैकात्मसम्बन्धस्य नियमायोगात् । यदि तदर्थं तस्य तादृशस्य क्रमशः क्वचित् ज्ञानसम्बन्धात् सर्वज्ञत्वम् ; किं पुनरसर्वज्ञस्वभावमजहतः इदम् ? प्राक् तज्ज्ञानस्वभावसम्बन्धविकलस्य तत्समवायिकारणत्वमसंभाव्यम् असमवायिकारणत्वं च ।] १५

**तद्** इत्यनेन तद्वैशद्यकारणम् अदृष्टं परामृश्यते, तस्य **वैचित्र्यात्** कारणात् [४३९ ख] बहिरन्तश्च **केषाञ्चिद्** ईश्वरप्रभृतीनां **युगपत् संवित् स्यात्**, तपःप्रभावविकलानाम् **अन्यथा** क्रमेण इत्थं व्यवतिष्ठेत ।

ननु अनुमानगम्यस्य एवमभावायोगात्, इतरथा सर्वत्र कार्ये दृष्टस्यापि कारणस्य वैफल्यं भवेत, अत एव तन्निष्पत्तेरिति चेत्, न, तल्लिङ्गस्य क्वचित् तेन प्रतिबन्धादृष्टेः, अदृष्टस्ये २० वापवस्य मा (स्यैवावश्यम) भ्युपगमनीयत्वात् । अत एव लिङ्गं न भवेत्, इत्याह- । दूषणान्तरमाह-**सत्यपि** इत्यादि । न केवलमसति किन्त्व (किन्तु) **सत्यपि** मनसि **स्मृतीनां युगपदुत्पत्तिः प्रसज्येत(ज्यते)** ।

कुत एतत् ? इत्यत्राह-**तदात्म** इत्यादि । तच्च मन **आत्मा** पुरुषः तयोः **सन्निकर्षस्य** अपेक्षेका(**अपेक्षिणा**)चितो (त्तो)त्पत्तेः । केन ? इत्याह [**ते**]**न** इत्यादि । यदि वा, २५ **तदात्मसन्निकर्षस्य च** युगपदुत्पत्तिः स्यादिति च व्याख्येयम् । कुतः ? इत्याह-[**ते**] **नानपेक्षित्वेन(क्षिणा)** इत्यादि । कस्य ? इत्याह-**अणोः** इत्यादि । स्मृतीनामयौगपद्ये अङ्गीक्रियमाणे किम् ? इहाह-(इत्याह-)**प्रदेश**[इत्यादि ।]

ननु चक्षुरादिबुद्धीनामपि तत एव परेण यौगपद्यं नेष्यते, ततः सामान्येन 'संवित्तीनाम्' इति वक्तव्यम् । न च स्मृतिशब्दः सामान्यवाची तद्विशेषवाचित्वात्, तन्न युक्तम् '**स्मृतीनाम्**' ३० इत्येतदिति चेत्, चक्षुरादिधियां कदाचिद् यौगपद्यमपि स्यात्, तथा प्रतिभास नानुमाम

(१) अदृष्टादेव । (२) संवित्तिविशेष ।

(नात् न हु) मविकल्पानां विपर्ययात् । अस्तु (अस्तु) वा, विप्रतोद्भावनमिति (?) प्रदेशात् कुतो संख्यप्रदेशात्मनो[ः]व्यतिरेकात् परस्परं भेदो (भेदात् च)र्व्यतिरेके अन्यतरस्त्वेव (स्येक एव)स्यादित्येवं वचनम् , तत्प्रदेशानाम् अवस्तुत्व(त्व)स्यात् । कुतः ? इत्याह- पदूपदार्थ इत्यादि । षडोऽन्यस्य पदार्थस्य अनभ्युपगमात् परेण इति भावः ।

५ तैर्द्रव्यव्यतिरिक्ता अपि ते सत्य(सन्ति)इत्येके तत्र (तत्राह-)कोऽर्थ इत्यादि । द्रव्यगुणकर्माणि अर्थाः *"द्रव्यगुणकर्मसु अर्थः" [वैशे० सू० ८।२।३] इति वचनात् । तेभ्यो व्यतिरेकपक्षे पदार्थस्य सत्तायाः समवाय समवायाभावात् *"त्रिपदार्थसत्करी सत्ता" इत्यभिधानात् । सामान्यादिपक्षे सन्त(न्त्यादिरूपापत्तेः सन्तः) न्ति चेत् अत्राह- [द्र]व्येत्यादि । तेषाम् आत्मप्रदेशानां मनस्त(सा च)न्येन वा शरीरादिना वा संयोग

१० अन्यत्र[र]व्यकः (त्रः) संयोगवाया(जो वा) कुतः ? नैव । विभागश्च कुतः ? तस्य संयोगपूर्वकत्व(कत्वात्) तदभावेऽभावात् ।

कुतो न स्यात् ? इत्याह-द्रव्यव्यतिरेकात् द्रव्याद् भेदात् तेषाम् इति, द्रव्यस्य च तदन्यत्वे[कुतः] संयोगादिगुणः ? यतः संयोगात् । कुतश्चिद् अदृष्टादेः सहकारिणः द्रव्यानतिरेके तेषामिति चेत् अत्राह-नचे ('न च')स्यादिना । तात्पर्यमिदमत्र-आत्मनो व्यतिरि-

१५ च्यमानाः तत्प्रदेशाः यदि द्रव्यम् , यथा घटाद् व्यतिरिच्यमाना कपालादयः तदात्मद्रव्यम् , तदन्यद् वा स्युः ? तत्र आद्ये पक्षे आत्मत्वसमवायाद् आत्मद्रव्यं त[०] प्रथमात्मकम् तथा (चुक्तम् )युक्तिविरोधात् । तत्राह-न च नैव आत्म[त्व]मथान्तरं सामान्यं प्रदेशेषु समवेतम् ।

कुतः ? इत्याह-प्रत्यात्मम् आत्मानम् आत्मानं प्रति प्रत्यात्मम् आत्मनं(नो) 

२० भेदप्रसङ्गात् बहुत्वप्राप्तिः । एवं मन्यते-एकत्रात्मनि "बहुत्वे [४४०त] अवयवत्व (त्व)-स्यादिप्रसङ्गः।किञ्च तेषाम्" असर्वगतत्वे आत्मसर्वगतत्वेकान्तप्रतिज्ञाहानिः । तेषां च मनसा संयोगे सुखसमवायोऽपि तेषामेव तत्संयोगजन्यत्वात् , तस्य संयोगजन्यत्वात् तस्य संयोगजाः *"अदृष्टः आत्ममनसोःसंयोगजः" इत्यभिधानात् । न च अन्यसंयोगजः अन्यं समवैति (वैति) सत्त्वान्तरेऽपि तत्प्रसङ्गात् । अदृष्टफलं च "तेष्वेवास्तु *"कर्तृ फलदायी" इति वचनात् । तेषां

२५ च आकान्तरगमने क्रियावत्त्वम् , अगमने(अगमने) संसारविलोपः । ता(ना)प्यन्यस्य दृष्टाद् अन्यस्य संसारः अतिप्रसङ्गात् । "द्वितीयपक्षे देशान्तरद्रव्यैः तत्संयोगविरहात् कथं तददृष्टेन तदाकर्षणम् इत्यपि (इत्यपि) चिन्त्यम् । प्रदेशमनःसंयोगः परमाणुसंयोगवत् सर्वोप इति न असर्वगतत्व(त्वम् ?) सर्वगतत्वे प्रथमवत् प्रसंख्यानवस्था(प्रसङ्गात् अनवस्था) च ।

---

(१) अभेदे । (२) वैशेषिकैश्च । (३) षट्पदार्थभिन्ना अपि । (४) विभवस्य । (५) 'समवाय' इति व्यर्थम् । (६) तुलना-"सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ।"-वैशे० सू० १।२।७ । ( ) संयोगमात्रे । (८) अभेदः । (९) प्रदेशानाम् । (१०) प्रदेशाः । (११) प्रदेशबहुत्वे । (१२) प्रदेशानाम् । ई एतदन्तर्गतः पाठो व्यर्थः । (१३) "आत्ममनसोः संयोगाद्सुखोत्पत्तिरिति"-प्रश० भा० पृ० ११८ । (१४) आत्मप्रदेशेषु । (१५)"कर्तुः प्रियहितमोक्षहेतु"-प्रश० भा० पृ० १३० । (१६) तदन्यतमिति पक्षे ।

तत्परिकल्पनवैफल्यं वा, प्रथमात्मता(का)त् कार्यनिष्पत्तेः पुनरपि स एव दोषः । पुनरपि तत्परिहाराय तत्प्रदेशकल्पने तदेव आवर्त्तत इति चक्रकम् इति न किञ्चिदेतत् । द्वितीयपक्षे दोषं दर्शयन्नाह–**नाप्यनात्मन** इत्यादि । पक्षान्तरसूचापि(सूचने **अपि** शब्दः) **अनात्मनं (नः)** प्रदेशस(स्व)रूपस्य द्रव्यान्तरस्य मनसा यः **सन्निकर्षः तस्मात् न सुखादयः** स्मृतयो भवितुमर्हन्ति । कुतः ? इत्यत्राह–**आत्मन्यादि (आत्म** इत्यादि) । दूषणान्तरमाह– ५ **प्रदेशतद्वतोः** इत्यादि । सुगमम् ।

पुनरपि **महात्म्य**(पुनरपि दूषणमाह– **आत्म**) इत्यादि । '**आत्मा** मनसा युज्यते, **मनः** [४४१क] **अक्षेन(अक्षेण)** इन्द्रियोता(येण अ)**क्षम् अर्थेन**' इति य **आत्ममनोऽक्षार्थसन्निकर्षः** संयोगादिसम्बन्धः **तस्माद् बहिरर्थज्ञानोत्पत्तौ** सत्यां **युगपज्ज्ञानोत्पत्तिः किन्न भवेत्** ?

नन्वेकत्वा[न्म]नसो न तेन[1] सर्वेन्द्रियाणां[2] तैरर्थाना युगपत् सम्बन्ध इति चेत्, अत्राह– १० **मनसाम्** इत्यादि । **एकत्वे मनसो युगपद् एकैव बुद्धिः स्यात्** । न चैवमस्ति, अनभ्युपगमात् । तयैव(तथैव)आत्मान्तरेपु ज्ञानानुदयप्रसङ्गात । तत एव तदुदये[3] एकत्रापि युगपदेक-(ऽनेक)ज्ञानोदयोऽनिवार्यः, अनेकत्रोत्पादाय इतिति(यतति) नैकत्र इति किंकृतो विभागः ?

स्योदतत् वहुत्वेऽपि एकेनैव मसाऽतौकः (मनसा आत्मैकः) सयुज्यते, इत्यत्राह–**प्रत्येकम्** इत्यादि । **एकम्** एकं मनः **प्रत्येकैकस्य आत्मनो** यः **सम्बन्धः** तस्य **नियमेन** अवश्यभावेन १५ **अयोगात्** आत्मना व्यापित्वविरोधात् इति भावः । कष्णदृष्टस्य घटनानियाम(कष्टा[4] अदृष्टस्य घटनात् नियम)कल्पना, उक्त(क्त)गेपदुष्टत्वात् । अथ अतदे(अप्रदे)[5]शस्य आत्मनः प्रदेशदोषयोजना कीदृशी ? इत्यत्राह–**यदि** इत्यादि । कुतः ? इत्यत्राह–**तदर्थ** इत्यादि । **तस्य** आत्मनः । दूषणान्तरमाह–**तादृश** इत्यादि । **तादृशस्य** कूट[स्थ]स्य[6] **क्रमशः** क्रमेण पुनः पुनः इति **क्वचित्** कस्याचिद् अवस्थायाम् **ज्ञानसम्बन्धात् सर्वज्ञत्वम्** '**असंभ(भा)व्यम्**' इति वक्ष्यमाणेन २० सम्बन्धः । तर्हि(न हि) तत्सं[7]सम्बन्धेऽपि[8] विषयग्रहणोन्मुखता पूर्ववत्[9] ।

युक्त्यन्तरमाह–**किं पुनः** इत्यादि । **पुनः** इति पूर्वदूपणदस्यानिश्रय(णादस्य निस्रय)-सूचकः । **असर्वज्ञस्वभावमजहतः किं सर्वज्ञत्वम्** ? इदम् दमत्त्वैव पर्यत्र[४४१ख] (इदमस्त्वा एव पर्यनुयोगः तं)त्सम्बन्धात् पूर्वविषयानभिमुखस्वभावो गगनादिवत् अग्राह्वते (अस्त्येव, उत) तदभिमुखस्वभावः[10] ? प्रथमपक्षे पूर्वं वाक्यं (पूर्ववत् वाच्यम्[11] ।) द्वितीयेऽपि २५ सकलविषयाभिमुखः, कतिपयपदार्थाभिमुखो वा अस्य स्वभावः ? तत्र आद्ये विकल्पे[12] जन्मिमात्रस्य सकलकुत्वाम् (सकलज्ञत्वम्) इति । द्वितीये द्वितीयमिति[13] ।

नत्व चोत्तरज्ञानं सति (ननु च उत्तरज्ञानं प्रति) समवायिकारणत्वमेवास्य विषयाभिमुखं (मुख्य) नापरम्, सहकारिविशेषात् कदाचित कीदृक्षज्ञान प्रति तस्य तद्[14] इति चेत ? अत्राह–

---

(१) मनसा । (२) इन्द्रियै । (३) आत्मान्तरे ज्ञानोदये । (४) कठिना इत्यर्थ । (५) प्रदेशरहितस्य । (६) आत्मन कूटस्थस्य । (७) ज्ञानसम्बन्धेऽपि । (८) नित्यत्वात् पूर्वावस्थावत् । (९) ज्ञानसम्बन्धात् । (१०) उत्पद्यते इति शेष । (११) 'न हि तत्सम्बन्धेऽपि विषयग्रहणोन्मुखता पूर्ववत्' इति दूषण वक्तव्यम् । (१२) प्राणिमात्रस्य । (१३) सर्वज्ञत्वमसम्भाव्यमिति । (१४)समवायिकारणत्वम् ।

प्राग् इत्यादि । प्रागिव(प्राग् अथ)स्मितज्ञानोत्पत्तेः पूर्वं च ज्ञान (तज्ज्ञान)स्वभावसम्बन्ध[1] विकलस्य(ऽविकलस्य) तज्ज्ञानमेव स्वभावः स एव सम्बन्धः तेन विकलस्य(लस्य)अचेतनस्य इत्यर्थः, तत्समवायिकारणत्वं ज्ञानसमवायिहेतुत्वम् असंभाव्यम् । तथाहि यत्र(यत्)ज्ञानस्वभावं(भाव)सम्बन्धविकलं त(द्धं न तत् )ज्ञानसमवायिकारणम् यथा पृथिव्यादि, तथा च परस्य आत्मा
५ तद्विकलः, इतरथा पृथिव्यादिरपि तत्कारणं भवेत् ।

ननु कोऽयमस्य पृथिव्यादेः तत्कारणत्वे प्रत्यभिज्ञाविक्षेपः, शरीरादेरनित्यत्वादिति चेत्; परमाणूनां स्यात् । तेषामदर्शनात् नेति चेत्, किं पुनः परपरिकल्पितात्मना(त्मनः)दर्शनमस्ति ? तथा चेत् परमाणूनामस्तु । ज्ञानस्य गुणत्वाद्[4] आधारमात्रं सिध्येत् तु वा(त्, तेऽथवा)त्मा परमाणवो वा इति न निश्चयः । तयो तत्कारणत्वे तद्वादिवद् बुद्धेः असमवायिभिरस्मदादिभिः
१० चेत् आत्मनाऽपि तत्कारणत्वे तद्विभुत्ववत् तन्महत्वं किन्न स्यात् ? अत्र गुणवैचित्र्यं न परत्रे-[ति] न[४४२क] विभागहेतुः[7] ।

अथ परमाणूनां बुद्धिगुणत्वे व्यापित्वं व्योमवत् स्यात् । तथाहि—'परमाणवो विभवः नित्यत्वे सति अस्मदादिप्रत्यक्षगुणाधारत्वात् व्योमवत्' इति चेत्; न घटादिना व्यभिचारात् । एकान्तिकनित्यत्वस्य सर्वत्र निषेधात् । ततो यथा तत्सम्बन्धविकलत्वात् न परमाणवः
१५ तत्समवायिकारणं तथा आत्मापि मा भूत् । असमवायिकारणत्वं स्यादिति चेत् अत्राह—असमवायिकारणत्व च इति तदसंभाव्यम् ।

ननु किमिदम् असमवायिकारणम् ? समवायिकारणाद् अन्यदिति चेत् निमित्तकारणमपि तयोऽन्यद् भवति, तथा च चक्षुरा[दिवत् त]द्विकलस्यापि[10] "तत्कारणम् इति निषेधानुपपत्तिः । अथ स्वकारणसमवायि[11] च उत्तरज्ञानस्य पूर्वज्ञानः, स्वकारणकारणसमवायि[13] यथा पटः(रूपं
२० प्रति तन्तुरूपम्) कारणकारणसमवायि वा(समवायि[14] वा) यथा ज्ञानस्य आत्ममनःसंयोगः, असमवायिकारणमुच्यते तदयुक्तम् आत्मनः क्वचित् कार्ये(कार्ये)ऽनभ्युपगमात् । अभ्युपगमाच्च पू(भाव इ)त्यन्त इति चेत् उच्यते—स्मरणज्ञानोत्पत्तौ संस्कारस्य तत्[15] "तदुत्पत्तौ ज्ञानस्य ०"ज्ञानजो ज्ञानहेतुश्च संस्कारः"[17] इति वचनात् असमवायिकारणत्व सिध्यते परेण, स्वकारणसमवतत्वस्य[18] भावात् तदपि तद्विकलस्य[19] असंभाव्यम् । यथैव हि
२५ चेतनस्य चातन(नाऽचेतन)गुणाधानम्, तथा तत्समवेतं चेतनं गुणत्वम् ।

---

(१) अविकलस्वभावस्य । (२) ज्ञानसमवायिकारणत्वे । (३) हेतोः । (४) आधारमात्रम् । (५) पृथिव्यादिपरमाणूनाम् । (६)ज्ञानकारणत्वे । (७) विभक्ते इति शेषः । (८) ज्ञानसम्बन्ध । (९) समवायिकारणाभिन्नम् । (१०) ज्ञानस्वभावसम्बन्धविकलस्यापि । (११) ज्ञानसमवायिकारणम् । (१२) उत्तरज्ञानस्य कारणम् आत्मा तत्र समवायि । (१३)पटरूपस्य कारणं पटः, तस्य कारणं तन्तवः, तेषु समवायि समवायसम्बन्धेन वर्तमानं तन्तुरूपम् । (१४) ज्ञानस्य पूर्वं कारणम् आत्मा अपरस्य कारणं मनः, उभयत्र समवायसम्बन्धेन वर्तमानः आत्ममनःसंयोग इति । (१५) 'तस्य' इति व्यर्थम् । (१६) संस्कारोत्पत्तौ । (१७) तुलना— ज्ञानजो ..." प्र० वार्तिकाल० ३।५२७ । (१८) ज्ञानस्य कारणम् आत्मा तत्र समवेतः संस्कारः इति । (१९) ज्ञानस्वभावविकलस्य आत्मनः ।

भवतु आत्मनः प्रदेशाः, ते च(न) ततः कथञ्चिद्भिन्ना इति चेत् , अत्राह–**यदि पुनः** इत्यादि ।

[यदि पुनः

**प्रदेशतद्वदैक्यं चेत् प्रतिपत्ताऽयं न लक्षयेत् ।**

**स्याद्द्रव्यपर्यययोस्तत्त्वं जयेद् धार्ष्ट्येन सौगतान् ॥२७॥** ५

आत्मादीनां प्रदेशतद्वतोः भेदेऽपि स्वभावत एव कथञ्चित्तादात्म्यं सम्बन्धान्तराभावात् । गुणगुणिनोः सहभूतयोः जातितद्वतोश्च न कथञ्चित्तादात्म्यमिति स्वमनीषिकया तत्त्वमिदन्तया प्रतिष्ठापयितुकामः वैयात्येन कुतर्कविभ्रमात् स्वार्थाकारयोः तादात्म्यपरिणामं प्रतिक्षिपतः शौद्धोदनिशिष्यकान् विजयते । नहि प्रदेशतद्वतां घटपटवत् स्वातन्त्र्यं समवायासंभवादन्यत्र तादात्म्यात् । ] १०

प्रदेश-आत्मनोः कथञ्चित्तादात्म्येऽपि अत्र तचन्नेति (अन्यत्वं नेति) चेत् , अत्राह–[४४२ख] तद्वदेस(**प्रदेश**)**तद्वदैक्यं चेद्** इत्यादि । **प्रदेशतद्वतोः ऐक्यं** प्रपत्तप्रतिपन्वः (**प्रतिपत्ता**) प्रतिपन्नवानयं नैयायिको **न** लक्ष्ययेचित् (**लक्षयेत् चेत्** ) **स्यात्** कथञ्चिद् **द्रव्यपर्या(र्य)ययोः[तत्त्वम् ]** एकतानात्व (तानत्व) मेव लक्षयेद् इत्यर्थः । **जयेद्धार्ष्ट्येन सौगतान्** द्रव्यपर्याययोः ऐक्यम् अलक्षयतः । १५

कारिकां विवृण्वन्नाह–**आत्मादीनाम्** आदिशब्देन गम(गग)नादिर्गृह्यते, **प्रदेशतद्वतोः भेदेऽपि कथंचित्तादात्म्यं स्वभावत एव** । कुतः ? इत्याह–'**सम्बन्धा**' इत्यादि । तादात्म्यसम्बन्धादन्यस्य सम्बन्धस्य **अभावात्** । न तावत्तयोः[1] संयोगः , मनःसंयोगवत् प्रसङ्गात् । न चैवम् आत्मादीनाम् तेपु तेया(ते वा प्रदेशाः)स्युः, इतरथा घटादयोऽपि[2] संयोगाऽविशेषात् । घटादीनामपि स्वप्रदेशैः संयोग एव स्यात् । अयुतसिद्धत्वमन्यद्वा प्रकृतेऽपि समानम् । नापि २० समवायः , तेषां[3] तदारब्धत्वप्रसङ्गात् , तथा च घटादिवदनित्यत्वम् , स्वारम्भकावयवसन्निवेशविशिष्टत्वेन ईश्वरस्याप्यन्येश्वरपूर्वकत्वम्[4] । तत एव संयुक्तसमवायादयो दूरोत्सारिता एव । **न गुणगुणिनोः कथञ्चित्तादात्म्यम्** , अपि तु भेद एव । किंभूतयोः ? इत्याह–**सह** इत्यादि । पुनरपि कयोः ? इत्याह–**जाती**त्यादि । चेति समुच्चये । इत्येव **स्वमनीषिकया तत्त्वम् इदन्तया** भेदैकान्तरूपतया च नानेकान्तक्षणिकादिरूपतया **प्रतिष्ठापयितुकामः शौद्धोदनिशिष्यकान्** २५ च **वैयात्येन विजयते** । किंकुर्वतः ? इत्याह–**तादात्म्यपरिणामं** प्रत्यक्षं **प्रतिक्षिपतः कुतर्कविभ्रमात्** । [४४३क] कथं त प्रतिक्षिपतः ? इत्याह–**स्वार्थाकार** इत्यादि । प्रपञ्चेन चर्चितमेतत् । प्रदेशतद्वतोरपि तादात्म्य नेति चेत् , अत्राह–**नहि प्रदेशतद्वतां घटपटवत् स्वातन्त्र्य** (न्त्र्यं) भवेद् इति भावः । समवायादेर्भावात् नैवं[5] चेत् , अत्राह–**समवाय** इत्यादि । किं सर्वथा तदसंभवः[6] ?, इत्याह–**अन्यत्र** इत्यादि । **तादात्म्याद्** अन्यस्मिन् सम्बन्धत्वे इष्यमाणे तद- ३० संभवः, तादात्म्ये तु संभव एव ।

(१) प्रदेशतद्वतो । (२) आत्मादीनाम् स्यु । (३) प्रदेशानाम् । (४) स्यादिति । (५) न स्वातन्त्र्यम् । (६) समवायासंभव ।

एतदेव दर्शयन्नाह–संयोग इत्यादि ।

[संयोगसमवायाभ्यामन्यत्र विभुद्रव्यवत् ।
स्वतः स्वभावतादात्म्यात्तत न व्यवतिष्ठते ॥१८॥

सर्वत्र तथापरिणाम मुक्त्वा नापरः संयोगः समवायो वा सम्बन्धः परिकल्प्यः । ५ तदभावे सर्वगतानां स्वप्रदेशवृत्तेरप्रसिद्धत्वात् । तद्भेदैकान्ते समवायवृत्तेः समवायस्य विशेषणीभावोऽप्य सम्बन्धवत् सर्वत्र अयमेवास्तु । नन्वं तत् ]

स्वतः स्वभावतादात्म्यात् ततो विना अन्यत्र अन्येषु परस्परं भिन्नेषु कुतः सम्बन्धो व्यवतिष्ठेत(ष्ठते) ? दृष्टान्तमाह–विभुद्रव्यवत् इति । संयोगादे(दि)र्विवक्षितेव नति [चे]त् अत्राह–संयोगसमवायाभ्यां न व्यवतिष्ठते इति ।

१० कारिकार्थ[मा]ह–सर्वत्र इत्यादि । त्वया(तया)परिणामम् अविनिर्भागपरिणतिं मुक्त्वा नापरः पुरुषदण्डयोः सम्बन्धः परिकल्प्यः । कोऽसौ ? इत्याह–संयोग, किन्तु तथा परिकल्प्यः । यदि पुनरनयोः कथञ्चित्तादात्म्येन वर्तमानः संयोगः स्यात्, तस्य पुरुषदण्डावयवौ से न अवयवी इति प्रसक्तम् कपालघटवदिति तथा च एकाकपणात् नियमेन सर्वोकर्षणम् । आत्मशरीरयोरपि अन्योऽवयवी, न चैवम् इति । तथा गुणादीनां तथा परिणामं तादात्म्य- १५ परिणाम(मं)मुक्त्वा नापरः सम्बन्धः परिकल्प(ल्प्यः) । कः ? इत्याह समवाय इति । कुतः ? इत्यत्राह–तदभावे तथा परिणामाभावे सर्वगतानाम् आत्मादीनाम् स्वप्रदेशेषु वृत्तेरप्रसि न्वभावात् (त्वात्) सम्बन्धाभावात् तथापरिणामः परिकल्पः(ल्प्यः) । [४४१ए] कस्मिन् ? इत्याह–तद्भेदैकान्ते तत्प्रदेशतद्वतोः नानात्वैकान्त इति । समवायः सम्बन्ध इति चेत् अत्राह–समवायवृत्तेः इत्यादि । समवायस्य स्वत एव वृत्तिः इति चेत् अत्राह–समवायस्य २ इत्यादि ।

असम्बन्धः समवाय इत्येके तेषां गुणो गुणी समवाय इति प्रत्ययजननात् कस्मात् उच्यते नासकल्पे(न असम्बन्धः) पदार्थान्तरवत् तज्जननविरोधात् । सम्बन्धेन यदि सर्वयोगात्मा[यथा] सूत्रगुणयोगात् सूत्रः । सम्बन्धेन ततो भवे सम्बन्धासिद्धिः । पुनः समवाय- कल्पने नैवनवस्था(ल्पने अनवस्था ।) विशेषणीभावात्र(वाऽत्र)सम्बन्धवत्(वत्) सर्व च २५ (सर्वत्राऽ)यमेवास्तु किं समवायेन ? नहि गुणादयो द्रव्यस्य न विशेषणम् । गुणागुणप्रतीति [1] एव(वं) स्याम् न इहप्रतीतिः इति चेत् कथं समवाये शक्तिः' इति प्रतीतिः ? सोऽपि विशेषणीभावः इहेदमिति प्रत्ययहेतुः नान्यत्र[स्य]मीश्वरविलसितम् । तत्सम्बन्धेऽपि (न्धेऽपि) तदन्तरकल्पने अन्याऽनवस्था । विशेषणीभावोऽपि नावस्य किं कुर्वाणः स्यात् ? अकिञ्चित्करस्य वस्तुत्वाऽयोगात् । किञ्चित्करत्व सर्व तद्वस्थम् । शक्तिः ततोऽभिन्नेति चेत् तथा गुणादयोऽपि

(१) संयोगः । (२) स्यात् तयोः संयोगात्मकः । (३) सम्बन्धः । (४) अन्यः सम्बन्धो न विद्यतेऽस्येति असम्बन्धः । (५) समवायात् । (६) समवाये । (७) गुण्यादी । (८) सम्बन्धान्तरकल्पने । (९) समवायात् ।

तद्वतो न व्यतिरिच्यन्ते । 'घटस्य रूपादयः' इति न स्यादिति चेत् , 'तद्वतः शक्तिः' इति कथम् ? गुणगुणिनोरभेदे एकग्रहणे सर्वग्रहणमिति चेत् , किं पुनर्द्रव्यादिग्रहणे सन्नि (शक्ति)-ग्रहणम्[2] ? तथा चेत् , मन्त्रादौ संशयादिः कुतः ? इति यत्किञ्चिदेतत् । [३४४क] परमतम् आशङ्कते **नवै** इत्यादि । तच्छब्देन आत्मानि (दि) परिग्रहः ।

तत्र दूषणमाह–**निरंश** इत्यादि । ५

**[निरंशात्माणुसंयोगात् स्मृतिर्नित्यं प्रसज्यते ।**

**परमाणुवदिष्टं चेत् स्मृतिषट्कं सहेक्ष्यताम् ॥२९॥**

**आत्ममनसोः निरंशत्वैकान्ते सन्निकर्षासंभवात् अकादाचित्त्वात्मविभुत्ववद्यावद्द्रव्यभावित्वात् कथं तत्प्रभवगुणविशेषस्य अन्यानपेक्षिणः कादाचित्कत्वं यतः कदाचित् स्मृतिः । अदृष्टकारणत्वे मनोऽहेतुकं स्यात् । सत्यपि अणौ मनसि आत्मनः स्मृतीनां** १० **षण्णां सप्तानां वा सहैवोत्पत्तिः स्यात् परमाणुवत्[3,4] । तदेतत् तदागमपठितं करणमात्मान्तरं द्रव्यान्तरं सदपि विचार्यमाणं अन्तर्बहिश्चाकिञ्चित्करम् ।]**

**अणु**रिति मनसोऽभिधान (नम्) **निरंशौ** यौ **आत्माणू** तयोः **संयोगाद्** हेतेः (हेतोः) **स्मृतिः नित्यं** सदा, उपलक्षणमेतदिति सर्वत्र च **प्रसज्यते** । न खलु समर्थस्य कारणस्य सर्वत्र सर्वदा भावे कार्यकादाचित्कत्वम् , अतत्त्वार्थत्वप्रसङ्गात् । १५

ननु सयोगस्य द्रव्ये सर्वत्राऽवृत्तेः नायं दोषः, नहि परमाणूनां संयोगाः (गः) तावद्व्याप्य वर्त्तते । तदाह–**परमाणुवद् इष्टं चेत्** इति । यथा परमाणुषु सयोगो वर्त्तमानो न सर्वदा तद्वात्मनि वर्त्तते अयावद्द्रव्यभावित्वादस्य तथा आत्ममनसोरप्य (रप्ये) **तदिष्टं चेत्** ; अत्रोत्तरमाह–**स्मृतिषट्कं सह** युगपद् **ईक्ष्यताम्** ।

एवं मन्यते–आत्मनो व्यापिनो मध्ये वर्त्तमानस्य अणुमनसोऽयावद्द्रव्यभाविनोऽवश्यं २० घट (षट्) संयोगाः आत्मन[:], स्वात्मना तस्य षड्भिः दिग्भिः सम्बन्धात् , तथा च तयोः तदेव सावयवत्त्वम् , अन्यथा कुतोऽस्य प्रदेशवृत्तित्वमिति ? अथ यथा जैनस्य परमाणूना नैरन्तर्येण अवस्थान सयोगः तथा ममापि आत्ममनसोः इति , युक्तमेतत् , किन्तु न सयोगो गुणः सर्वगतत्व (तः) मनोदेशपरिहारा[त्]। भवन्तु तस्य युगपत् षट्संयोगाः, तेभ्यस्तु स्मृतिः एकैव वज्ञा (तर्ज्ञा) तन्तुभ्य एकपटवत् तत्सयोगेभ्यो वा इति चेत् , न , अन्यथाऽभिप्रायात् । तथाहि– २५ यथा एकत्वेऽपि मनसः ततः सहात्मनि समवेताः सयोगाः षट् तथा स्मृति (त) योऽपीति [४४४ख] न तदेकत्व स्मृत्येकत्व (त्व) निवन्धनमिति ।

कारिका विवृण्वन्नाह–**आत्म** इत्यादि । **आत्ममनसोः निरंशत्वैकान्ते** अङ्गीक्रियमाणे **सन्निकर्षस्य** आत्ममनसोः सयोगस्य तयोरन्यस्य सम्बन्धस्य **असंभवात् अकादाचित्त्वात्मविभुत्ववद्यावद्द्रव्यभावित्वात्** कारणात् **कथं तस्य तत्प्रभवगुणविशेषस्य तस्मात्** सन्नि- ३० कर्षात् प्रभव उत्पत्तिः यस्य स चासौ **गुणविशेषश्च** बुद्ध्यादिः **तस्य** । न[नु] तदपेक्ष (क्ष्य) स्य

(१) गुण्यादे । (२) अस्ति ? (३) सयोगस्य । (४) भवति ।

[तत् ] सिद्धिरिति चेत् , कु(क्व) तस्य तदा(द)पेक्षा ? रूपादौ इति चेत् , तत्र चक्षुरादि- लिङ्गादेर्भावा[त् ] सिद्धसाधनम् । तत्र ततोऽप्यन्यस्य साधने , साङ्ख्यमतवद्[3] अनवस्था ।

किंच, सर्वस्य तत्रूपे वे समस्य (तत्क्षयोपशमस्य) प्रमेये प्रवृत्तावधि (वपि) ज्ञानं परा- श्रयम इति प्रत्यक्षत(त्वं न) स्यात । कु (क्व) ? भाविनि सुखादाविति चेत , न, उक्तमत्र [अ]मनस्कसुखादिना व्यभिचारादिति । ५

किं च, एव वादिनः सर्वमध्य[क्ष]म इन्द्रियजं तत्त्वात्[4] कुतो न सिध्यति ? अन्यथा- नुपपत्तिवैकल्यात्[5] , इतरत्र समानमिति स्थीयतामविवादेन ।

भवतु वा परपरि(परि)कल्पितं मनः ततो ज्ञानं वा, तथापि योगमते 'न[6] सर्वज्ञानं वा तथापि यागमते' न सर्वज्ञः इति दर्शयन्नाह–स्वत इत्यादि ।

**[स्वतोऽसत्यः पुनः संवित्प्रकाशासंभवाद्यतः ।** १०

**अत्यन्तमात्मनि परतः अनवस्थानतः कुतः ॥३०॥**

**सत्यपि सर्वार्थसन्निकर्षे असर्वज्ञत्वं सदसदात्मकत्वात् वस्तुनः । यतोऽयं योगनि- र्मितेन्द्रियशरीरः ऋद्धौ सर्वान् अनेकधा पश्येदनुस्मरेद्वा ।]**

**स्वतः** स्वरूपेण **अत्यन्तम्** एकान्तेन **आत्मनि** स्वरूपेऽ**सत्या(त्यः)**तत्राव्या- [प्रियमा]णायाः **संविदो** ज्ञानस्य **प्रकाशासंभवात्** तस्याः प्रतिभा[साभा]वात कुतः पुनः १५ सर्वज्ञत्वम स्वबुद्धेरप्यग्रहणात् । तत्र युक्तम्–*''**सदसद्वर्गः कस्यचिद् एकज्ञानालम्बनमेक- त्वात् (नम् अनेकत्वात्) पंचादूगुणवत् (पञ्चाङ्गुलवत् )** ।'' इति, तत्संविदा व्यभिचारात् । ज्ञानान्तरात् तस्याः प्रकाशे, इत्यत्राह–**परतः** अन्यतो ज्ञानात तस्याः '**प्रकाशासंभवात्**' इति सम्बन्धः, **अनवस्थानेतो(स्थानतोऽ)**र्थमात्रस्यापि ग्रहणाभावात् ।

यद् यस्मात् [सन्निकर्ष]सत्वा (सत्त्वा) **दयं** परीक्षमाण आत्मा **सर्वान्** अर्थान् **पश्येत्** । २० किंभूतः ? इत्याह–**योग** इत्यादि । कस्मिन् सति ? इत्याह–**सिद्धा(ऋद्धा)** वित्यादि । कथं किच ? इत्याह–**अनेकवा(धा)** इत्यादि । तथा **अनुस्मरेद् वा** । 'यतः' इति वा आक्षेपे [४४६क] नैव[अनुस्मरेत् ] ।

अथ संविद आत्मनि सत्त्वेऽपि सन्निकर्षवादिनः प्रकारान्तरेण सर्वज्ञत्वाभाव (वं) दर्शय- न्नाह–'**सत्यपि**' इत्यादि । संभवानायाम **अपि** शब्दः । **योगनिर्मितेन्द्रियशरीर**स्यापि योगिनः २५ मनसः चक्षुरादेर्वा अर्थैः सन्निकर्षस्य भावतो[ऽ]भावाद्रिद्धि (वात् । ऋद्धि) प्रादुर्भावात् पूर्वम् उत्पद्य विनष्टैः सद्धि (तद्) व्युपरमात् ,[10] ऊर्ध्वं उत्पत्स्यमानैः सन्निकर्षाभावात् । तथापि उच्यते– **सत्यपि** सर्वतः **सर्वार्थैः सन्निकर्षे** अस्य '**अयम्**' इत्यनेन जातविभक्तिपरिणामेन सम्बन्धात् । किम् ? **असर्वज्ञत्वम्** । कुतः ? इत्यत्राह–**सदात्मकत्वा सदा(सदसदा)त्मकत्वात्** सदात्म- [कत्वादसदात्म]कत्वाच्च । कस्य ? **वस्तु[नः]**इति । द्रव्यादीना[ना सदात्मकत्वम् अ]सदात्मकत्वं ३०

(१) भावेन्द्रियस्य । (२) द्रव्येन्द्रियापेक्षा । (३) तेन एकादशेन्द्रियस्वीकारात् । (४) अध्यक्ष- त्वात् । (५) इति चेत् , । (६) 'न सर्वज्ञान वा तथापि यौगमते' इति द्विर्लिखितम् । (७) स्यात् । (८) परमार्थत' । (९) सन्निकर्षस्य नष्टत्वात् । (१०) आगामिकाले । ऋद्धिप्रादुर्भावानन्तरम् ।

परः प्राह–इन्द्रियसंयुक्ते घटे सत्ता समवेता तद्विशेषणं प्रागभावादिः, ततः संयुक्तसमवेतविशेषणीभाव इति, तदप्यसारम्, नित्यायाः तस्याः [४४७क] तद्विशेषणायोगात् आत्मादिवत्।

किंच, प्रागभावो घटकाले विनश्यति तदा तस्यापि प्रध्वंसोऽस्ति, तथा प्रध्वंसस्य प्रागसतो भावे प्रागभावः, न च तत्रेयं ग्रहणप्रक्रिया(प्रक्रिया), सत्तासमवायाऽभावादभावस्य। न ५ च तस्यानित्यताव्यपदेशः, उभयान्तव्यवधिसत्तासम्बन्धाभावात। नास्तीति चेत्, पदादौ(पटादौ) कः समाश्वासः? उपचारात् स तत्रेति चेत्, अन्यत्रापि ततः स्यादविशेषात्। विशेषणीभावो परतो व्यमानोऽववानात् (भावोऽपरतः सम्बध्यमानश्चेत) तस्यापि तेन कः सम्बन्धो येन ग्रहणं भवेत्? विशेषणीभाव इति चेत्, किं पुनरसावनेकः(सौ अनेकः?) तथा चेत्, समवायोऽपि स्यात्। समवेतबुद्धेरभेदान्नैवं चेत्, तन्निबन्धनापि बुद्धिर्न भिद्यत १० इति समानम्। तन्न असदात्मना इन्द्रियसन्निकर्ष इति न तस्य ग्रहणम् इति[न]सर्वज्ञत्वं सन्निकर्षवादिनः इति स्थितम्।

तथापि सर्वज्ञत्वोपगमे नैयायिकवत् सौगतस्यापि किञ्चित् स्वाभ्युपेतं तस्य(नश्य)तीति दर्शयन्नाह–**प्रत्यक्षम्** इत्यादि।

**[प्रत्यक्षं सर्वविषयं भिन्नकालमनागतम्।** १५
**वेत्ति चेदर्थसारूप्यात् प्रामाण्यं संविदां न वै ॥३१॥**

**कुतश्चिदर्थादुत्पन्नं ज्ञानं यदि तदतिक्रान्तावेव योग्यतया प्रत्यक्षम्; अनागतेऽपि किन्न स्यात्? तत्सारूप्यातिशयसंभवात् तदुत्पत्तेश्च तत्प्रत्यक्षत्वकल्पनायामतिप्रसङ्गात्। यस्य दर्शनयोः अलम् असद्ग्रहकल्पनया अतिप्रसङ्गात्। यथैव हि कारणाभावलक्षणे भवतः स्वतन्त्रस्य कार्यत्वमत्यन्तमयुक्तं तथैव स्वकार्यकारणस्वलक्षणसंवेदनं** २० **च। यदि कुतश्चित् संवित्तेः परिच्छेदसामर्थ्यम्; प्रमेयकाले एव स्यात्। दृश्यदर्शनयोरुपकार्योपकारभावस्य सर्वदा भावात्। तदेतद् द्रव्यं स्वत एव यथा परिणामलक्षणं तथैव जीवात्मकमेतत् स्वत एव ज्ञानस्वभावकं प्रत्येयम्। कारकज्ञापकशक्तेः स्वतः सद्भाविन्या एव परतः परिणामात्मोपकार्यविशेषप्रतिलम्भोपपत्तेः। तन्न कश्चिदज्ञानात्मा ज्ञानसम्बन्धात् ज्ञाता नाम घटादिवत्। स्वत एव सकलग्रहणप्रकाशोऽपि। तदयमात्मैव स्वतः** २५ **संविदात्मा सुखादिरूपेण, दोषावरणविमुक्तः स्वलक्षणमनन्तज्ञानादि केवलं प्रतिपद्येत।]**

**प्रत्यक्षं** तत् **सर्वविषयम्**, किंभूतम्? **अनागतं** भावि, उपलक्षणमेतत् तेन भूतमपि गृह्यते। तत् किं करोति? इत्याह–**भिन्नकालार्थां(कालम् अर्थं) वेत्ति चेद्** यदि भूतं भाविनो भावि भूतानिशे(न्निःशे)षानिति **प्रामाण्यं संविदा(दां) नवै** नैव **अर्थसारूप्यात्** किन्तु अन्यतः कुतश्चिद् अतिशयाद् भवेत्। नहि भाविनो योगिनोऽपि ज्ञान जायते, यतः ३०

(१) सत्ताया। (२) प्रागभावस्यापि। (३) प्रागभावप्रध्वंसाभावमध्यवर्तिन्या सत्ताया सम्बन्धाऽभावादित्यर्थ। अर्थात् य उत्पद्यते विनश्यति च स एवानित्य। (४) विशेषणीभाव। (५) भेदाऽभावात्। (६) विशेषणीभावनिबन्धनापि। (६) अर्थात्।

तदाकारं स्यात , अन्यथा सर्वभाविभावकार्यकाल एव तेन भवितव्यमिति [४४७ख] न ज्ञान-
मात्र कार्यकाले, कस्य काले तेन भवितव्यम् इति । तथा अनादिसकलकार्यकालेऽपि भवि-
तव्यम् । एवं वक्तव्यम् तथा एकस्मात् भिन्नकालं कार्यद्वयम् *"नाक्रमात् क्रमिणो भावाः"
[प्र० वा० १।४५] इत्यादिविरोधात् । अथ योगिनः सकलं वर्तमानमेव, न तस्य किञ्चि-
५ त्कार्यं न च कार्यं नापि तज्ज्ञाने स्वाकारसमर्पकम् इति प्रश्न(च)मकारकम् (क) रणे च तज्ज्ञान सम्-
मर्थेव भवेत् । अथ न ज्ञानम् अतत्कार्यम् अतदाकारं ग्राहकम् सकलं तथास्तु, *"यस्य भावो
भाव्य" इति न सर्वाविशेषः । एतत् सौगतं प्रति । तथा संविदा(दां) तत् तस्माद् अर्थात अन्-
न वै । नहि विवक्षितज्ञानं प्रति सर्वे भाविनो भूता वा अर्थाः कारणम् । कार्यकाले सन्निहितस्य
भागः(गौ) कार[ण]त्वोपगमात , इतरथा अर्थदेशे असन्निहितं तत्र चक्षुर्ज्ञानमुपजनयेत्
१० अदृष्टो वा धर्मादिविशेषो[असन्निहितः] सर्वं ऊर्ध्वमत(स्वज्ञाननिमित्त)मिति नास्मदर्थगत्वम् ।
एतद् उभयं प्रति ।

कारिकार्थमाह-कुतश्चित् इत्यादिना । कुतश्चित् अनन्तरादतीताद् भाविनो वा विज्ञान-
समानक्षणाद अर्थात उत्पन्नं ज्ञानं यदि प्रत्यक्षम् अर्थसाक्षात्कारि । अस्मिन् सति ?
इत्याह-तदतिक्रान्तादे[र]तस्य अर्थादुत्पन्नार्थस्य अतिक्रान्तिः अतिक्रमः तस्यामेव योग्यता
१५ तस्य[स्य]प्रमेय तत्र (यस्य प्र) त्वात् तदुत्पन्नत्वादिति भावः । अनागतेऽपि अविशेषाद् वर्तमाने-
पि किम स्यात् ? 'प्रत्यक्षम्' इत्यनुवर्तते तत्र च वक्ष्ये लोपः [४४८क] । विकल्पे कथं सं-
दर्शयन्नाह-तद् इत्यादि । तेन प्रमेयेण सारूप्यादिविषयो यः तस्य संभवात् ततः प्रभवत्वस्यैव
वं प्रत्य(तत्प्रत्यय)स्वकल्पनायाम् अतिप्रसङ्गात् । तत्र सारूप्यादिसमावतत्त्वस्यैवाम्
अतिप्रसङ्गं दर्शयन्नाह-यस्य दर्शनयोः इत्यादि । सुगमम् ।

२० अत्रैव दूषणान्तरं दर्शयन्नाह-अलम् इत्यादि । तात्पर्यमत्र-यदा भावय[द्वि]-
त्वमेव तदाकार(कारार्पण)क्षमम् नेष्यते तदा 'अभूत एव भावता' इत्युक्तं स्यात् अलं
पर्याप्तं असतो ग्रहकल्पनया । कुतः ? इत्याह-अतिप्रसङ्गात् । तत्र व्यपदेश तैल्कस्य-
नायाम् अतिप्रसङ्गं दर्शयन्नाह-यथैव हि इत्यादि । यथैव हि प्रकारेण कारणाभावलक्षणे
नीलक्षणे भवतः जायमानस्य । किंभूतस्य भवतः ? सत असत्य कार्यतम् अत्यन्तमयुक्तम् ।
२५ एतत् नैयायिकेनापि सर्वं सौगतं प्रति । यथैव सत्त्व सत्य कार्यस्य एव कारणस्वलक्षण-
(णं)ज्ञानकालेऽविद्यमानं तस्य संवेदनं च अन्यन्तमयुक्तम् । एवं मन्यते-यथा सौगतस्य[च]ति
मई कारणं न कार्यजन्मनि व्याप्रियते कार्यं वा न 'तस्य' इति व्यपदिश्यते, तथा संवेदनकाले
अविद्यमानं न तद्ग्राहकशक्तिसमन्वितम्, संवेदनं वा ग्रहणसामर्थ्यसहितम्, अन्यथा हेतुफल-
भावो भिन्नलक्षणयोः ग्राह्यग्राहकत्वद् भवेदविशेषात् । अथवा संवेदनस्य कारणं सलक्षणं तस्य
३० [४४८ख] संवेदनमत्यन्तमयुक्तम् कार्यविशेषत्वात्तस्य । कारणात्यय च जायमानं न 'तस्य'

(१) अभी । (२) "भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञास्तदा-
काकारार्पणक्षमम् ॥"-प्र० वा० । (३) तदाभावलक्षणभावाम् । (४) 'भावकत्वं' इति भवेत् ।

इति व्यपदिश्यते चिरत (चिरतरातीत) वत् । तर्हि यथा कारणं कार्यकाले सदेव तदुत्पादयति तथा संवेदनं प्रमेयसमये सदेव तद् गृह्णाति, तत्फलत्वाद् इति नैयायिकः, तत्राह–यदि कुतश्चित् सम्बन्धात् तदुत्पत्तिलक्षणात् संवित्तेः परिच्छेदसामर्थ्यम्; अत्र दूषणम्–प्रत्येयं क(प्रमेय)ज्ञान-काल एव वस्तुनि स्यात् परिच्छेदसामर्थ्यम् न अतीते न भाविनि इति कथं कस्यचित् सर्वज्ञ-त्वमिति भावः । अतीतानागतं वा ज्ञानस्य कारणम् इति तत्रैव तत्सामर्थ्यम् इति । नहि ५
अतीताऽनागतमात्रद्वयमपि दर्शनस्य मिथ्यानुभवमायादन्यत पश्यति(इति) मन्यते ।

सम्प्रति दर्शनस्य न सम्बन्धः उपकाराभावादिति चेत्, अत्राह–उपकार्योपकारकभावस्य दृश्यदर्शनयोः सर्वदा कालत्रयेऽपि भावात् मिथ्याविकल्पगुणैः सकाशात् इति ।

ननु "ग्राह्यं न तस्य ग्रहणं न तेन" इत्यादिवचनात् स्वरूप(१)वेदनमेव सर्वज्ञत्वम् न सर्ववेदनम् इत्यपर, तत्राह–तदेतद् द्रव्यम् इत्यादि । तत् तस्माद् उक्तान्न्यायात् एतत् १०
प्रतीयमानं द्रव्यं स्वत एव [न] भिन्नपरिणामाद् यथा परिणामलक्षणं परिणामो लक्षणं यस्य इति तथैव जीवात्मकं भेतनं (एतत्) स्वत एव नान्यतो ज्ञानस्वभावकं स्वपरग्रहणपर्यायात्मकम् प्रत्येयं चित्रैकरूपस्य स्वपरग्रहणस्वभावाविरोधात् । चक्षुरादि [४४९क] व्यापार[रेणैव स्वय त]-स्य तत्स्वभावकत्वे (वस्तुत्व) स्यादिति चेत्, अत्राह–कारक इत्यादि । कारकं कर्त्रादि, जानातीति ज्ञापक आत्मा तयोः शक्तेः स्वतः सद्भाविन्या एव परतः चक्षुरादेरपि परि- १५
णामात्मोपकार्यविशेषप्रतिलम्भोपपत्तेः ।

ननु च ज्ञातृविचारे किमर्थम् अप्रस्तुतस्य कारकस्य ग्रहणमिति चेदृह (चेत ? दृष्टा) न्तार्थम् । यथैव कारकस्य शक्तिः स्वतः सती शालिबीजादेः, परतोऽपि परिणामात्मोपकार्यविशेषप्रतिलम्भः तथा ज्ञातुरपि । नहि क्रिया (कृष्या) विना यवबीजस्य शाल्यङ्कुरजातिका (जनिका) शक्तिः आधीयते । २०

निगमयन्नाह–तन्न इत्यादि । य [न एव] तत्तस्मात् क्वचिद् आत्मा अन्यो वा अज्ञा-नात्मा ज्ञानस्वभावरहितो ज्ञानसम्बन्धात् न ज्ञाता नाम घटादिवद् इति ।

ननु घटादेः तत्सम्बन्धोऽपि नास्ति तत्कथं निदर्शनमिति चेत्, न, समवायस्य व्यापकस्य सर्वत्राविशेषा[त्] निषेधाच्च । स्वत एव ज्ञानस्वभावत्वे सर्वस्य सर्वदर्शित्वमिति चेत्, अत्राह–स्वत एव इत्यादि । तदन्ययेर्थान्तरसम्बन्ध्या व्यापप्रबोधश्च (तदन्यया अर्थान्तरसम्बन्धिन्या २५
वा स्वापप्रबोधश्चेत आत्मनः) सकलग्रहणप्रकाशोऽपि । यत एव तत् तस्माद् अयं स्व-संवेदनाध्यक्ष आत्मैव स्वतः संविदात्मा नादा (न तु आ) त्मसंविदोर्भेद इत्यर्थः । स च किंभूतः ? इत्याह–सुखादिरूपेण इत्यादि । दोषावरणविमुक्तो दोषावरणवैकल्यात् स्वलक्षणं स्वस्वरूपम् अनन्तज्ञानादि केवलम् असहाय प्रतिपद्येत यतः स्वभावविभुत्वम् इति ।

भवन्तु तर्हि आत्मनः स्वभावभूताः [४४९ख] प्रदेशाः, इत्यत्राह–यथा इत्यादि । ३०

(१) कार्यम् । (२) प्रमेयम् । (३) द्रष्टव्यम्–पृ० ४१९ । (४) ज्ञानस्वभावकत्वम् । (५) ज्ञान-समवायोऽपि ।

[यथात्मा सम्यगध्येतानन्तप्रदेशैः स्वतः ।
तथार्थोऽनन्तपर्यायैः तथार्थाः समवायिनः ॥३२॥

कथञ्चित् ]

यथा अनन्तप्रदेशी सम्यगध्यस्त विस्तरात्मादि(?)स्वतः न समवाय्यविवक्षात्
५ तथा अर्थः प्रमेयो घटादिः अनन्तपर्यायैः तस्तन्मा(तस्मात्)नार्था समवायिनः
समवायवन्तः ।

कारिकां व्याख्यातुमाह–कथञ्चित् इत्यादि । सर्वं[सुगमम् ] ।
आत्मप्रदेशाभावे पुनरपि दोषमाह–तत् इत्यादि ।

[तत्प्रदेशोपचारेऽपि युगपज्ज्ञानसम्भवः ।
१० दूराच्छब्दश्रुतिरस्ति यथैवैकान्तवादिनाम् ॥३३॥

परमार्थतः प्रदेशनानात्वाभावे आकाशस्य प्रत्येकं रूपादिज्ञानं प्रसज्येत । आकाशस्य कथं स्युः । कार्यव्यतिरेकोपलक्षणाच्च कारणभेदस्य । न हि अभिरारोपितोऽपि दहति, सुस्पर्शाभावप्रसङ्गात् । कथंचित् प्रदेशनियमाभ्युपगमे तत्र दोषोऽनभ्युपगमी । विप्रकृष्टदेशानामपि शब्दानां श्रुतिः स्यात् संयुक्तसमवेतत्वस्य ग्रहणकारणस्य भावात् आत्माकाशयोः
१५ सर्वगतत्वात् मनसश्च सक्रियत्वात् । अदृष्टनियमे मनः अतिरिच्यताम् ।]

तस्य आत्मनः प्रदेशोपचारेऽपि वस्तुतोऽप्रदेशत्वे उपचरित[प्र]देशोपगमेऽपि युगपज्ज्ञानसंभवः । दूषणान्तरमाह–दूरात् शब्दश्रुतिरस्ति एकान्तवादिनां नैयायिकानाम् ।

कारिकार्थं दर्शयन्नाह–परमार्थतः अनुपचारतः प्रदेशनानात्वाभावे आकाशस्य(आकाशस्य)प्रत्येकं रूपादिज्ञानं प्रसज्येत । यत्र हि चक्षुरादीनामन्यतमेन मनः संयुज्यते तत्रैव आकाशेन ततः संयुक्तसमवायात् रूपादिग्रहणकाले गगनसमवेतसर्वशब्दग्रहणमिति । यदि पुनः आकाशेन संयोगेऽपि न मात्रेणे इत्युच्यते अत्राह–आकाशस्य इत्यादि । कर्मं आदि(त्यादि) परमतम आशङ्क्य दूषयितुम् । अत्र दूषण कथम् इत्यादि । स्युरेव । कुतः ? इत्याह–कार्य इत्यादि । कार्यं शब्दः तज्ज्ञानं च आकाशस्य तस्य व्यतिरेकः पृथग्भावः तेन उपलक्षणात्
२५ कारणभेदस्य[ग]गनप्रदेशनानात्वस्य । उपचारितः(चारतः) तस्य प्रदेशभेदः ततः श्रुतिभेदः इति चेत् अत्राह–नहि अभिरित्यादि कुतो न दहत्येव ? इत्यत्राह–[आरोपितोऽ]पीत्यादि । माणवकाद् अन्यस्मिन्नपि अग्नौ न दहति[४५ क] अयमिति चक्षुरस्योस्य(य सुस्योऽपि) तस्य अभावप्रसङ्गात् । उपचारस्य सर्वत्र कर्तु[शक्यत्वात्] सम्भवात् उष्णस्पर्शाभावस्य च अविशेषादिति भावः ।

---

(१) प्रदेशरहितस्य । (२) संयोगः । (३) यतोऽग्निमपि स्पृशः उष्णस्पर्शरहितः उष्णस्पर्शेन दग्धो भवति इत्यर्थः ।

सन्तु तत्त्वतः तत्प्रदेशा इति चेत्, अत्राह—**कुतश्चित्** तदविनाभाविकार्यात् **प्रदेश-नियमाभ्युपगमे** 'कर्णशष्कुल्यवरुद्धः अन्यः तद्विपरीतः अन्यः प्रदेशः इति' नियमस्य अङ्गीकरणे **तस्य** आकाशस्य **भेदा(दोऽ)वश्यंभावी** । तथा च एकत्व गगनस्य दुर्लभम्, आत्मप्रदेशवत् प्रसङ्गश्च चिन्त्यः । निष्प्रदेशत्वे तस्य पुनरपि दूषणमाह—**विप्रकृष्ट** इत्यादि । यत्र न[भ]सि समवेताः सर्वशब्दाः तत्र संयुक्तं मनः ततः **संयुक्तसमवेतत्वस्य ग्रहणकारणस्य भावात्** तं च वरणमिति (तत्श्रवणमिति) तर्हि आसन्नेऽपि एतदेव श्रवणकारणम् । स्यान्मतम्—मनःसयुक्तात्म-प्रदेशसप्राप्तः शब्दो मनसा गृह्यते, [1]विभुद्रव्यविशेषगुणत्वे सति अस्मदाद्युपलभ्यमानत्वात्, सुखादिवत्, ततोऽयमदोष इति, तत्राह—**आत्माकाशयोः सर्वगतत्वात् मनसश्च [स]क्रियत्वात् विप्रकृष्टदेशानामपि शब्दानां श्रुतिः स्यादिति** ।

एवं मन्यते—क्रियावत् मनः शब्दोऽक्रियः, ततः शब्ददेशं प्राप्य तत् प्रकाशकं चक्षूरश्मि-वत् । एव च दूरादिप्रतीतिः सौगतकल्पिता न विरुद्ध्यते । वीचीतरङ्गन्यायेन अक्रियस्य शब्दस्य आगमनप्रयासपरिहारश्च । अध्व (अथ) दूरदेशाना श्रवणे कथं निकटा प्रतीतिः ? कथं सखो-(शाखा)प्रदेशे चन्द्रमसः प्रतीतिः ? [४५०ख] इन्द्रियस्याऽऽशुवृत्तेः, अत्रापि मनसः शब्द-ग्रहणे तथैव आशुवृत्तिः । अथ मनः शरीर विहाय नान्यत्र याति, कथं चक्षुर्याति ? गमना-दर्शनम् उभयत्र ।

स्यान्मतम्— चक्षुः अर्थदेश गत्वा त प्रकाशयति तैजसत्वात् प्रदीपवत्, मनोऽपि इन्द्रियत्वात् नयनवत् इति समानम् । अथ ये श्रूयन्ते शब्दाः तद्देशे तद्गमनम् नान्यत्र देशे, केन कृतमेतत् ? अदृष्टेन इति चेत्, अत्राह— **अदृष्ट** इत्यादि । **अदृष्टेन नियमे मनः अतिरिच्य-ताम्**[3] अदृष्टत एव तदर्थसिद्धेः त[द]नर्थकमिति ययुक्त (यदुक्तं) परेण ग्रन्थैकस्य (ग्रन्थे, *''एकस्य) सर्वैः [मूर्ति]मद्भिः युगपत् संयोगः सर्वगतत्वम्, आत्मार(त्मादेः'') इति, त निरसत्वे (तन्निरशत्वे) अनुपपन्नम् इति ।

यद (तद् दूषय)न्नाह— **प्रदेशा** इत्यादि ।

**[प्रदेशाः सन्तु मा वा सम्बध्येद् युगपद्विभुः ।**
**अनन्तैरपि पर्यायैः तथात्माप्यसकृत्स्वतः ॥३४॥**

विभोरात्मनः अन्यस्य वा यावद्भिः परस्परव्यावृत्तैर्मूर्तिमद्भिः संयोगाः तावन्तस्ते परस्परव्यावृत्तात्मानः संयोगिनः तावतः स्वभावभेदान् अन्यथानुपपत्त्या साधयन्ति । ते पुनः प्रदेशव्यापदेशभाजो भवन्तु मा वा, भावस्तादात्म्यात्तैः स्वत एव सम्बध्येत । एतेन ' पर्याय ''। संयोगभेदाभावे तदन्यतमविभागे सर्वेषां सह विभागप्रसङ्गात् । तथा च कस्यचिचलने सर्वकार्यद्रव्यं सकृदेव चलेत् सर्वत्र संयोगैकलोपपत्तेः । तथा विभुद्रव्यवत् परमाणोः स्वत एवानन्तपर्यायसिद्धिः ।]

**प्रदेशा** भागाः **सन्तु मा** व (वा) भूवन् प्रदेशा गगनादेः तथापि **सम्बध्येत् विभुः**

(१) आकाशस्य । (२) विभुद्रव्यम् शब्दे आकाश । (३) त्यज्यताम् इत्यर्थ ।

स एव दोपः । अन्या चेत् , यदि तत्कालभाविनी , युगपत् त्रयप्रतीतिः–'संयोगः, तदवस्था, विभागश्च' इति । अथ तदुत्तरकालभाविनी , तदा न तर्हि संयोगः । तथा चेत् , न नहि (न तर्हि) विभागात् संयोगनाशः । पूर्वं तस्य नाशात् तदंत (तत) श्चेत् , अन्योऽन्यसंश्रयः–संयोगनाशाद् विभागतः (गः, ततः) तन्नाश इति ।

पर आह–विनाशसक (शक) कारणसमग्रता विनश्यदवस्थेति , तत्काले सयोगस्य भावे ५ स एव दोपः–संयोगविभागयोः सहप्रतीतिरिति, विभागस्यैव तद्विनाशककारणत्वात । अथ विभागजेन विनाशेन तिरस्कारात् न तत्काले[1] तत्प्रतीतिः[2] , तदसत् , ताभ्यामुत्तरकालभावी विनाशः कथं पूर्वसयोगतिरस्कारकारी । नहि रात्राद (व) विद्यमानो [४५२क] दिवाकरप्रतानः तदाकारा (तारा)-निकरतिरस्कारकारी ।

स्यान्मतम्–विभागसंयोगस्यव (गवि) नाशयोराशुवृत्तेरेककालताध्यवसायः, ततो विभाग १० कालेऽपि अध्यारोपेण तद्विनाशस्य भावात् तेन तत्तिरस्कारः[3] , तदपि न/सुन्दरम् , यतः अध्यारोपितस्य अर्थक्रियासामर्थ्यनिपेधात् ।

किं च, भावपक्षस्य वलीयस्त्वात् भावेन सता संयोगेन विनाशस्य तिरस्कारो युक्तः, इतरथा ज्ञानज्ञानव्यवाये विच्छिन्ना व्यवाये विच्छिन्ना (ज्ञानव्यवाये 'विच्छिन्ना) वशादिस्वर-धारा'[4] प्रतिपत्तिर्न स्यात् । १५

अपि च, कोऽयं तेन[5] तस्य तिरस्कारः ? विनाशकरणं चेत् , तर्हि [न] विभागात् संयोगवि-नाशः, ततः संयोगस्य[6] [अ]भावतो विनाशो न विभागादिति प्राप्तम् । अथ सातस्थगत (अथ तत्स्थं[7] तत्) तदपि[8] , द्रव्यसा (स्य) स्वरूपाखण्डने युक्तम् । तन्न संयोगकाल (ले) विभागः । पुनः स्यादिति चेत् , तद्विनाशसमये स्यादिति न विभागप्रयुक्तः तद्विनाशः, सहभावात् । कुतस्तर्हि विनाशः ? कुतो विभागः ? क्रियत (क्रियातः) इति चेत् , अत एव विनाशः, तथादर्शनात् । २० न च तद्विनाशास्त (श-त) त्कालेऽपि विभागः प्रतीतिभाक् । ततः स्थितम्–'सयोगविनाशो विभागः, तस्य चैकत्वे विभागैकत्वम्' इति । एवमनैकान्तिकत्वे परिहृते यत्प्राप्त (प्तं तत्) दर्शयन्नाह–**तथेत्यादि** । तथा तेन प्रकारेण सति तत्परिहारे **विभुद्रव्यवत् परमाणोः अनन्तपर्यायसिद्धिः स्वत एव** ।

निगमनमाह–**तत इत्यादि** । [४५२ख] २५

[ततः

**क्रमेणानुभवत्तत्त्वं चेतनाचेतनात्मकम् ।**
**चैतन्यं संसारेतरव्यवस्थाप्रत्यनीकतः ॥३५॥**
**नान्यदेव ततो ज्ञानं सामान्यात्तदात्मनः ।**
**स्वतस्तादात्म्यपरिणामात् सम्बन्धादनवस्थितेः ॥३६॥]** ३०

---

(१) विभागकाले । (२) सयोगप्रतीति । (३) सयोगतिरस्कार । (४) इति । (५) विनाशेन । (६) विनाशात् । (७) तस्मिन् तिष्ठतीति तत्स्थम् । (८) उच्यते उपचारात् । (९) एतद् उच्यमानम् । (१०) तद्विनाशकाले तत्काले वा ।

क्रमेण तस्यमेकत्वम् अनुभवत् 'प्रत्यक्षं भवति' इत्यध्याहारः । किंभूतम् ? इत्याह—चन नेत्याह (त्यादि) । चीच (जीव) मन्यं चेतनात्मकम् [चेतनात्मक]न्यदिति । कुतः चेतनात्मक-मिति चेत् ? अत्राह—चैतन्यमित्यादि । कथं ससारेतरव्यवस्था इति चेत् ? अत्राह—प्रत्य-नीक इत्यादि । यत एवं ततो नान्यदेव ज्ञानम् आत्मनः । कुतः ? इत्याह—सामान्येत्यादि ।
५ साऽपि कुतः ? इत्याह भावात्म्यपरिणामात् । एतदपि कुतः ? इत्याह—[सम्य भावम वस्थिते ] सम्बन्धान्तरकल्पनायामनवस्था[ऽ]निवृत्तेः । कुतस्तन्निवृत्तिरि(ति ? इ)त्याह-स्वत इत्यादि । तादात्म्यसम्बन्धादेव नान्यतः ।

प्रकृतमुपसंहरन्नाह—तदयम् इत्यादि ।

[तदयं चेतनो ज्ञाता सवेदनात्मा प्रतिक्षणम् ।
१०　तत्प्रतिबन्धविश्लेषे सर्वज्ञः सर्वार्थदृक् ॥३७॥
अन्यथाऽप्राप्यकारित्वात् कुतो व्याप्तिग्रहो यत ॥२॥

यत एवं तत् तस्मादयं (दयं) प्रत्यक्षवेद्यः । किं घटादिः ? नेत्याह—चेतनः । चेतन-सम्बन्धात् न इति चेत् अत्राह—सवेदनमेव आत्मा स्वभावो यस्य स सवेदनात्मा । [अ]भावमात्रात्मक इति चेत् नेत्याह—ज्ञाता स्व परं च अनयतीत्यर्थः । स किम् ? इत्याह-
१५ सर्वज्ञ । कस्मिन् सति ? इत्याह—[तत् ]प्रतिबन्धविश्लेषे । कुतः ? इत्याह—सर्वार्थ इत्यादि । कदाचित् सर्वज्ञः पुनरसर्वज्ञः स्यादिति चेत् नेत्याह—प्रतिक्षणं पुनः प्रतिबन्धस्य अभावादिति भावः । सन्निहितमेव जानाति नेतरदन्यदर्थमिति (नेतरदिति) चेत् अत्राह-अप्राप्यकारित्वाच्ये(च्चे)तनस्येति । कुतोऽन्यथा व्याप्तिग्रहः ? यतोऽनुमानं देशार्थ-परिज्ञानं वा ?

२०　विपक्षे बाधकं दर्शयन्नाह—सर्वज्ञ इत्यादि ।

[सर्वज्ञ करणपर्यायव्यवधानातिवर्तिधीः ।
परिक्षीणदोषावरणो नो चेत् भासयते हि कः ॥३८॥

तथापरतः कस्यचित् सर्वज्ञत्वं सत् इति सुभाषितम् । ]

करणानि इन्द्रियाणि पर्यायः परिपाटि:(टिः)क्रम इति यावत्, व्यवधानं देश-
२५ चितौ चि(ति)रोधानम्, त्य(तान्य)तिवर्तति(ते) इत्येवं धीका धीर्यस्य स तथोक्तः सर्वज्ञः । कुतः ? इत्याह—[४५१क] परिक्षीणदोषावरणभासयतो(णो भासयते)नो चेत् इत्यम्भूतः सर्वज्ञे(ज्ञो)न यदि कः सर्वज्ञः ? न कश्चित् ।

(१) चतन । (२) प्रतिभासमात्रत्वात् शून्यः स्यादिति सद्भावर्तु(?)रभिप्रायः । (३) तुलना-'भवतु नाम—यदि सूक्ष्मे व्यवहिते वा वस्तुनि इन्द्रियातीतपरोक्षे न स्यात् कथं तर्हि ज्योतिर्ज्ञानादि-संवादः ? ज्योतिर्ज्ञानमपि हि सर्वज्ञप्रवर्तितमेव एतस्मादविसंवादिनो ज्योतिर्ज्ञानात् सर्वज्ञसिद्धिः । अनुपदे-शीतस्यपरोक्षेऽर्थे न चेन्दुर्यां कृता कुतः । ज्योतिर्ज्ञानाविसंवादः श्रुताद्वैतसाधनान्तरम् ॥ इति ।"—धर्मो० प० पृ० ११६ । (४) व्यतिरेकरूपेण बाधक-स्वभावपरिग्रहः ।

कारिकातात्पर्यं दर्शयन्नाह–**तन्न** इत्यादि । यत एवं **तत्** तस्मात् **नापरतः** भिन्नज्ञानात् चक्षुरादेर्वा **कस्यचिद्** ईश्वरादेः **सर्वज्ञत्वम्** । कुतः ? इत्यत्राह–**सत्** इत्यादि । इत्येव **सुभाषितं** 'मम' इत्याध्याहारः ।

एवं योगसौगतसायने(शासने) अशेषज्ञा(ज्ञानं) निराकृत्य साङ्ख्यमते तन्निराकर्तुकामः तन्मतमुपन्यस्यव्यवका(न्यस्यति, **अहङ्का**)रेत्यादि– ५

**[अहङ्कारमनोबुद्धिचैतन्यादिविभागतः ।**
**उपयोगमात्मनोऽज्ञस्य साङ्ख्याः संचक्षतेऽचितः ॥३९॥**

चैतन्यवृत्तिमचेतनस्य 'स्वार्थमिन्द्रियाणि आलोचयन्ति मनः सङ्कल्पयति अहङ्कारोऽभिमन्यते बुद्धिरध्यवस्यति इति' विनियोजयन्तः कापिलाः केवलं । बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते इत्येकान्ते न कश्चित् सर्वदर्शी स्यात् चक्षुरादिनिवृत्तेर्बुद्धेर्दर्शनात् । यदि पुनः स्यात् तथैव पुरुषस्य बुद्धिरिति अध्यवस्यत्येव तत्र किमालोचनादिभेदकल्पनया ? अवग्रहादिज्ञानविशेषाभिधानबहुत्वात् परिसङ्ख्या विरुध्येत तदुपयोगविशेषाणां मतिश्रुतादिविषयत्वात् ।] १०

**अहङ्कारादी**ना कृतद्वन्द्वजा (द्वन्द्वानाम्) **विभागेन** सह तासः(तसः) तेन ततः, **आत्मनो** जीवस्य **उपयोगं** व्यापारविशेषं आलोचन-मनन-सङ्कल्पनाऽध्यवसायलक्षणसं(णम् **अ**)**ज्ञस्य** अचेतनस्य । किं कुतः स न ? इत्याह–**अपित**:(**अचितः**) चितः पुरुषादन्यस्य इत्यर्थः । **साङ्ख्याः संचक्षते** कथयन्ति । तथा च तेषां राद्धान्ते[2] *"इन्द्रियाण्यर्थमालोचयन्ति, अहङ्कारोऽभिमन्यते, मनः संकल्पयति, बुद्धिरध्यवस्यति, पुरुषश्चेतयते ।" इति । १५

अनेन चेतनात्मधर्मान् आलोचनादीन् अचेतने प्रधाने अध्यारोपयन्तः कापिला मूढमतयः इति दर्शयति । नहि अन्यधर्ममन्यत्र जानन् स्वस्थः, इतरथा हेम्नो(म्नः) पीततां शुक्ले शङ्खे पश्यन् स्वस्थो भवेत् । कथं ते तद्धर्मा[3] इति चेत[4] ? कथं घटस्य रूपादयः ? तथा दर्शनात्[5], अन्यत्र समानम्–[5]चेतनाकप(कव)लितानाम् आलोचनादीना प्रतीतेः, ज्ञानदर्शनोपलक्षणत्वादात्मनः । अथ तेषु चेतना समारोपिता प्रतिभाति(भाति) न मुख्यतः, क पुनरियं[6] मुख्यतः ? पुरुषे इति चेत्, न, तत्रै[7]वोप[च]रिताऽस्तु[५५३ख] [8]अन्यत(त्र तु) मुख्या । तदा(न हि आ)लोचनादिव्यतिरिक्ततः(क्तः) पुरुष(षः) प्रतीतिभाक्, यस्य चेतना स्यात् । अथ परमार्थतः पुरुषस्यैव सा[9] बाधवर्जनात्, न तेषां[10] विपर्ययात्, किं पुनस्तेषां स्वतन्त्ये(चैतन्ये) बाधकम् ? 'चेतनायाः परिणामित्वापत्तिः' इति चेत्, किं पुनः साङ्ख्यस्य परिणामित्वमसिद्धम् ? तथेति चेत्, प्रधानमपरिणामीति न युक्तम्–[11]प्रकृष्ट *"प्रकृतेर्महान्" [साङ्ख्यका० २२] इत्यादि । प्रकृतिः परिणामिनी, न चेतना इति किं कृतो विभागः ? २० २५ ३०

(१) तत्पुरुषसमास इत्यर्थः । (२) सिद्धान्ते । द्रष्टव्यम्–पृ० ९९ टि० ४ । (३) आत्मधर्मा. । (४) इति चेत् । (५) चेतनाव्याप्तानाम् । (६) चेतना । (७) पुरुष एव । (८) आलोचनादौ । (९) चेतना । (१०) आलोचनादीनाम् । (११) 'प्रकृष्ट' इति व्यर्थम् ।

स्यान्मतम्–प्रकृतेः परिणामित्वेऽपि न पुंसस्तत् तत्र (चित्र)त्वात् भावस्वभावानाम्, अन्यथा चैतन्यम् अन्यदपि वा(चा)द्यर्थं स्यादिति । स्यादेतदर्थं यदि प्रधानपरिहारेण पुंसो[ऽ] भविष्यदिल्यं कुतश्चित् प्रतिपन्नं स्यात्, तत्परिहारेण पावकस्य उष्णत्ववत् । न चैवमिति । आगमात् प्रतिपन्नम्, यथाह–"न प्रकृतिर्न विकृतिः पुरुषः" [सांख्यका० ३] इति

५ तन्नेदमुत्तरम् अन्यत्र समत्वात् ।

किञ्च, तत(तै: त)थाविधं पुरुषं कः प्रत्येति ? प्रधानमिति चेत् कथमचेतनम् ? अन्यथा बुद्ध्यध्यवसितमर्थं चेतयमानोऽपि पुरुषः अचेतनः स्यात् । पुरुष इति चेत् आगमेन क्रियमाणा तस्य स्वप्रतिपत्तिः यदि कादाचित्का, तदेव तत्परिणामित्वमि य(मिति । न चे)दागम वैफल्यम् । अभिव्यक्तिरपि नित्यस्य निरस्तेति यत्किञ्चिदेतत् ।

१० कारिकां व्याख्यातुमाह–चैतन्यवृत्तिम् इत्यादि । चैतन्यस्य वृत्तिम् आलोचनादिपरिस्पन्दम्, अचेतनस्य प्रधानस्य विनियोजयन्त [४५४क] तत्सम्बन्धिनीं कुर्वन्तः क(का)पिलाः । केन प्रकारेण ? इत्यत्राह–स्वार्थम् इत्यादि । ते किं कुर्वन्ति ? इत्याह–केवलम् इत्यादि । रूपान्तरमन्तरेण तत्कथनादाह–बुद्ध्यध्यवसितम् इत्यादि । बुद्ध्यध्यवसितमनुवर्तनीय (बुद्धयनिरूपण) निश्चयस्यापि(पि) गमरूपत्वाद् एवकारेण बाह्यस्य व्यवच्छेदं स ह(स्मा)

१५ अर्थम् असाकारं पुरुषश्चेतय[ते] इत्यर्थं यद्येकान्तोऽसर्वज्ञभावः[तस्मिन्] न कश्चित् कपिलोऽन्यो वा सर्वदर्शी स्यात् । कुतः ? इत्यत्राह–चक्षुरादिति(दिनि)वृत्तेः चक्षुरादीनां व्यावृत्तेः । कुतः ? इत्यत्राह–दर्शनात् बुद्धः पुरुषेण साक्षात्करणात् ।

स्वरि (सूरि)रेवं मन्यते–यदि बुद्धिं पुरुषो न पश्यति कथं तदध्यवसि (तदध्यवसित) मर्थं पश्येत् ? नहि दर्पणाऽदृष्टौ तत्प्रतिबिम्बदृष्टिरस्ति ।

२० किञ्च, बुद्धेस्तेनाप्रदर्शने कुतस्तस्याः सिद्धिः, अर्थाध्यवसायसिद्धिर्वा ? पुरुषादिति चेत् 'स तां न पश्यति, तत एव तत्सिद्धिः' इति व्याहतम् अतिप्रसङ्गात् । स्वत इति चेत् सौगत मतानुप्रवेशः, अर्थाकारस्य स्वसंवेदनस्य सौगतैरुपगमात् । अथ करणमन्तरेण अर्थग्रहाप्रसिद्धेः तत्सिद्धिः न, चक्षुरादेरेव तथा सिद्धः (तत्सिद्धेः) ततोऽन्यस्य कल्पनायामनवस्था–तथोऽन्यपरस्य कल्पनात् (नात्) । पश्यतीति चेत् यदा(यदि वा) स्वभावादिमनस्येन सर्वज्ञत्वं प्र-

२५ (सत् तत्) पुरुषम् तत्र अपरचक्षुरादिविरहानवस्थाप्रसा(प्रासे)ः । (अ)न्यथेति चेत् अर्थं मपि तथैव (तथैव) पश्यतीति सूक्तम्–'बुद्ध्यध्यवसितम्' इत्यादि । ततः सूक्तम् 'चक्षुरादि निवृत्तेर्दर्शनात्' इति ।

अपरे [४५४ख] पठन्ति 'चक्षुरादिवृत्तेर्दर्शनात्' इति । तत्रास (तत्राय)मर्थः–चक्षुरादिवृत्त्या दर्शनात् अर्थस्य तस्या एव तेन सम्बन्धात्, पुरुषस्तु बुद्धिप्रतिबिम्बमेव पश्यति

३० नार्थं(र्थम्)युगपदिति ।

(१) स्यान्मत । (२) सर्वज्ञ । (३) बुध्यार्थं सर्वे । (४) 'प्रत्येति' इति सम्बन्धः । (५) सांख्य । (६) स्वार्थी । (७) बुद्धेः । (८) पुरुषः । (९) बुद्धिम् । (१०) बुद्ध्यादेः । (११) कर्मसूत्रमा इति सिद्धेः । (१२) सर्वमहत्त्वसिद्धेः । (१३) चक्षुरादिव्यापारेण । (१४) व्याख्यानकाराः । (१५) चक्षुरादिवृत्तेः । (१६) अर्थेन ।

परमतमाशङ्कते—**यदि पुनः** इत्यादि । **यदि** इति पराभिप्रायस्य **पुनः** इति पक्षान्तरस्य द्योतने यथा **कश्चित् सर्वदर्शी स्यात् तथैव** तेनैव आलोचनाद्यन्तरमन्तरेण प्रत्यक्षताप्रकारेण **पुरुपयस्य (पस्य) बुद्धिः 'स्यात्'** इति गतेन सम्बन्धः । **अध्यवस्यत्येव** निश्चिनोति तथैव **'बुद्धिः अर्थम्'** इति सर्वमपेक्षम् (क्ष्यम्) । एवकारेण कस्यचिदप्यर्थस्य अनध्यवसायो नास्तीति दर्शयति । ५

एतद् दूषयन्नाह—**'किं तत्र'** इत्यादि । **तत्र** [त]स्मिन्ननन्तरोक्ते परमते **किम् आलोचनादिभेदकल्पनया ?** *"**स्वार्थमिन्द्रियाण्यालोच्यन्य (लोचयन्ति)**" इत्यादिना **किम्** ? यथैव पुरुषः तद्भेदकल्पनामन्तरेण बुद्धिं पश्यति, बुद्धिर्वा[अर्थम्] इन्द्रियाणि तदालोचनाति (नानि) मनः तत्सकल्पनम्, अहङ्कारं तदभिमा[नम] तदपरेन्द्रियादिकल्पनामन्तरेण [अ]ध्यवस्यति, अन्यथा अनवस्था । ततो न कश्चित् सर्वदर्शी स्यात्, तथा सोऽर्थं पश्येत् १० इति भावः ।

अधुना 'चैतन्यान्नान्या बुद्धिः' इति दर्शयितुं तदीयहेतोर्व्यभिचारविषयं दर्शयन्नाह—**'अवग्रहादिज्ञान'** इत्यादि । तात्पर्यमिदमत्र-तथा (यथा) चैतन्यं बुद्धिः इत्यभिधानभेदमादा[य, तथा अ]वग्रहादिज्ञानविशेपाधात (पाभिधान) बहुत्वात् कारणात् **परिसंख्या** बुद्धिश्चैतन्यमिति परिगणनं [४५५ क] **विरुध्येत** तत्त्वबहुत्वं स्यादिति । १५

स्यान्मतम्—तदभिधानबहुत्व जैनस्य स्वेच्छाकल्पितमिति, परमपि साङ्ख्यस्येति समानम् । लोकप्रसिद्धिरुभयत्र । स्यादेतत्, अवग्रहादिज्ञानविशेषा बुद्धेरेव भेदाः ततस्तदभिधानबहुत्व बुद्धेरेव पर्यायशब्दबहुत्वमिति, तत्राह—**सति (मति)** इत्यादि । तस्य आत्मनः उपयोगविशेषाः **तदुपयोगविशेषाः** तेषा **मतिः** अवग्रहाद्यात्मिका **श्रुतं** शाब्दं ज्ञानम् **आदि** (पदेन स्मृत्यादि)—परिग्रहः ते **विषयो** येषा तेषा भावात् तत्त्वात् **परिसङ्ख्या विरुध्येत** । एव मन्यते—यथा अवग्रहादेर्बुद्धावन्तर्भावः तथा तस्या आत्मनीति । २०

भवतु बुद्धिचैतन्ययोरभेदः । तत्र को दोष इति चेत् ? अत्राह—**नास्ति ज्ञत्वमित्यादि** ।

**[नास्ति ज्ञत्वं प्रधानस्य चेतनाऽपरिणामिनः ।**
**पुरुषस्य न वै कश्चित् सर्वज्ञोऽनुभयात्मकः ॥४०॥**

**यथैव हि शरीरयोगात् शरीरी प्राणयोगात् प्राणीति [1]व्यपदेशश्चेतनस्य तथा अर्थान्तरेण अहङ्कारादिना योगाद् अहङ्कारी बोद्धेति यदि व्यपदिश्येत ; दृष्टिश्च पृथक् प्राप्नोति । ततोऽयुक्तम् घटादेरिव अचेतनस्य आलोचनादिकम् । तन्न [2] अन्यथा । सतोऽपि अज्ञत्वाबुद्धिमत्त्वाभ्यां न स युक्तः । कः सर्वज्ञः ? ]** २५

[अयं]भावः—**चेतना** परिणामात्मिका बुद्धिर्न **प्रधानस्य पुरुषस्य वाऽपरिणामिनः** इति । **ज्ञत्वं नास्ति प्रधानस्य** अचेतनस्य । **न च** नैव इष्यते । साङ्ख्येन पुसा ज्ञत्वं परिणामित्वक्रियाकपिलमास्ते (क्रियाकवलितमास्ते) को **न कश्चित् सर्वज्ञोऽनुभयात्मकः** ३०

(१) आलोचनादिभेदमन्तरेण । (२) अवग्रहादिज्ञानविशेषाभिधाननानात्वम् ।

प्रधानपुरुषस्वरूपाद् भिन्नस्वाभ्या(स्वभावस्या)न्यस्यानभ्युपगमात् । अथवा, तत्र क आत्मा सर्वज्ञः स्यात् तदुरूप(तदुभय)स्वभावाद् भिन्नस्वभावः ।

कारिकार्थं दर्शयन्नाह–यथैव हि इत्यादि । यथैव हि स्पष्टं शरीरयोगाद्वेदोः जीवः शरीरी प्राणयोगात् प्राणी इत्यर्थं व्यपदेशः चेतनस्य जैनमते अर्थान्तरभूतस्यात्मनोऽप्यस्य(त्मनस्तस्य)-
५ रीरादि, तथापेक्षं, न स्वतः, तथाऽर्थान्तरेण अहङ्कारादिना योगाद् अहङ्कारी बोद्धा इत्यर्थं यदि व्यपदिश्येत सांख्यः 'चेतनः' इत्यनुवर्तते । [४५५ख] एव(एतद्) दूषयन्नाह–दृष्टिश्चे-त्यादि । दृष्टिरपि चैतन्यमपि न केवलम् अहङ्कारादि पृथक् भिन्नं पुरुषात् प्राप्नोति । नैयायिकस्य न सांख्यस्य (नेति सांख्यस्य न नैयायिकस्य तेन)मनस्या(मनसा)दिति भावः । न चैवम्, अतो दृष्टिवद् अहङ्कारादिकं तेनाऽभिन्नमभ्युपगम्यम् । यत एवं ततोऽयुक्तम् । कस्य ? इत्याह–
१० अचेतनस्य इत्यादि । किम् ? इत्याह–आलोचनेत्यादि । कस्येव ? इत्याह–घटादेरिव । प्रकृत-मुपसंहरन्नाह–तस्य इत्यादि । विपक्षे बाधकमाह–अन्यथा इत्यादि । पुरुषस्य स स्यादिति चेत् अत्राह–सतोऽपि । सांख्यं पुरयो(सांख्यपुरुषस्य च)प्रमाणकत्वादसन्नेव । तथाप्युक्ते-सतोऽपि पुरुषस्य न सयुक्तं (स युक्तः) कुतः ? इत्याह–अज्ञत्वाऽशुद्धिमत्त्वाभ्याम् । अन्यः सर्वज्ञ इति चेत् अत्राह–क इत्यादि । पूर्ववद् व्याख्यातव्यम् ।

१५ साम्प्रतं पुरुषसाधकं परस्य प्रमाणं दूषयन्नाह–चेतनाचेतनमित्यादि ।

[चेतनाचेतनं सर्वं चेतनं वाऽनुमीयते ।
परार्थं सङ्घातत्वात् कर्तृत्वं चक्षुरादिवत् ॥४१॥

परार्थाः [ चक्षुरादयः सङ्घातत्वात् शयनाद्यङ्गवत् ] इति चेतनसद्भावेन चेतना-चेतनसद्भावेन अपरार्थेनानैकान्तिकत्वादहेतुः । न हि चक्षुरादीनां सङ्घातत्वमन्यत्र ।
२० तत्समनन्तानमितरत्रापि विशेषाभावात् व्यामोहाभावात् ।]

चेतनं सर्वं चेतनाचेतनं वा सर्वम् इति धर्मिद्वयम् न पुनः 'अचेतनं सर्वम्' इति वक्तव्यम्, परि(परं)प्रति सिद्धसाध्यतापत्तेः तेन तथाभ्युपगमात् । परार्थं परप्रयोजन-मनुमीयते कापिलेन(कापिलेन) । कुतो हेतोः ? इत्याह–सङ्घातत्वाच्चक्षुरादि[वदि]ति । चेतनस्य सर्वस्य कर्तृत्वम्, अन्यथा चक्षुरादेरपि तन्न स्यात् । अहि तस्यापि परापकरणा-
२५ दन्यत् । तथा च "अकर्ता निर्गुणः" इत्यादि विरुध्यते । अथ नानुमीयते, तर्हि तनैव पुरुषसाधनस्य व्यभिचारः इति भाः(भावः) । पक्षीकरणान्न [४५६क] तेनम्(तेन) व्यभिचार इत्य दि(पि) चेतनवर्गात् चेतनाचेतनवर्गोद्य सोऽन्यः स्यात् यदर्थं तन्निमित्तं सकलं जगद् भवेदि[ति] । तन्न कश्चित् साध्यानवस्थितः तत्राप्यपरापरसाधनात् ।

कारिकां व्याख्यातुं परप्रयोगमाह–परार्था चक्षुराद्य(इत्यादि । तद्) दूषयन्नाह–चेतने

(१) व्यपदेशः । (२) पुरुषात् । (३) सांख्यस्य । (४) अनुमीयते । (५) कर्तृत्वम् । (६) सां-ख्यका० ११९ टि० ६ । (७) 'परार्थाः चक्षुरादयः सङ्घातत्वात् शयनासनाद्यङ्गवत्' इति ।

त्यादि । **चेतनसङ्घातेन** पुरुषसङ्घातेन **चेतनाचेतनसङ्घातेन** प्रकृतिपुरुषसङ्घातेन **अपरार्थेन अनैकत्वा (कान्तिकत्वा) द्हेतुः** सङ्घातत्वादिति धर्मः ।

ननु यथं[1] यादृश सङ्घातत्वं चक्षुरादीना न तादृशं विपक्षे, ततो न व्यभिचार इति चेत्, अत्राह–**नहीत्यादि** । [हि] यस्मान्न **चक्षुरादीनामपि** न केवलं प्रकृतस्य **सङ्घातत्वमन्यदेव** अन्यत्र समवस्थानात् अविनिर्भागवर्तनादपि तु तदेव । भो तु (भवतु) तथापि न तद्विपक्ष इति ५ चेत्, अत्राह–**तत्समवस्थानमितरत्रापि** प्रकृतविपक्षेऽप्यस्ति । न चक्षुरादीनां सङ्घातत्वम् एकत्वम्, न न(येन) [चेतनानां] चेतनाचेतनाना वा ततो[ऽ]विशेष इति चेत्, अत्राह–**विशेषाभावादिति** । *"**भेदानां परिमाणात्**" इत्यादिना [साङ्ख्यका० १५] एकपरिमाणस्य रूपादेभात् (रूपादेरभावात्) भेदस्य च सर्वत्र साधयितु [श]क्यत्वात् इति भावः ।

यत्पुनरुक्तम्–**शयनाद्यङ्गवदिति** । तत्रेदं विचार्यते–कस्तत्र परः यदर्थं तत्? शरीरमिति १० चेत्, न, तद्धोक्तृत्वापपत्तेः । अत एव न बुद्धिरपि । पुरुष इति चेत्, कः तत्तदर्थं च प्रत्येति? प्रधानमि[ति] नोत्तरम्, उक्तत्वात् । स[3] एव स्वपरप्रकाशरूपत्वात्तस्येति चेत्, चक्षुरादावपि स्वार्थमिन्द्रियादि स एव अवगच्छतीति किमर्थं तत्रानुमानम्? व्यामोहव्यवच्छेदार्थ [४५६ख] (र्थं), शयनादौ तदर्थं (तदस्ति, यदर्थं) तद[त]स्तत्राह–**व्यामोह(हा)भावात्** । तथेति चे[त्,] निदर्शनान्तरास(प)त्तिः अ[न]वस्थाकारिणी । चक्षुराद्यदा करणम्(?) अन्योन्यमप्रयमावकर्ति १५ (अन्योऽन्याश्रयमाकर्षति) ।

किंच, स्वपरप्रकाशकत्वं पुंसः परिणामाविरोधि, सदेकस्वभावे त[4]दयोगात् ।

ननु रश्वे(ननु स्वे)तरग्रहणवत् कस्यचित् कारणापि (कारणेऽपि) यदि तस्योपयोग[ः] किं विरुध्येत? न किं[चित्], केवलमकर्तृत्व न स्यात् ।

अपि च, आत्मग्रहणे यस्य (यदि) आलोचनादिकमपेक्षेत, अनवस्थानम् । अन्यथा विषये २० स किं[तदपेक्ष]ते? ताथा (तथा) त्मान तत्प्रत्येति[5], तदर्थ(र्थं)शयनादिकं न प्रतीयते(येत), उभयप्रतिपत्तिनान्तरीयकत्व तत्परीतेहितिदृशाते(कत्वात्तत्प्रतीतेरिति दृष्टान्ते) सर्वमसिद्धम् ।

एतेन धर्म्याद्यसिद्धिरपि वित्तिता (चिन्तिता) । तन्न कपिलमते कश्चिदशेषवित्, नापि मुक्त इति ।

[तदेवाह–दृश्य-]**दर्शनयोरित्यादि** । २५

**[दृ[6]श्यदर्शनयोर्मुक्तिर्नित्यव्यापकयोः कथम् ।**
**यतस्तापाद् विमुच्येत तदर्थं पुरुषो यतेत ॥४२॥**

**न प्रधानस्यापि परिणामातिक्रमः, चैतन्यस्य वा, अन्यथा अदृश्यस्वभावं प्रधानस्य प्राप्नोति । दृश्य ˙ तथा ˙˙˙ । एतेन पुरु[7]षकैवल्यार्था प्रकृतिप्रवृत्तिरिति प्रतिविहितम्,**

(१) 'यथ' इति व्यर्थम् । (२) 'समन्वयात् शक्तित प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूपस्य॥' इति शेष । (३) पुरुष एव । (४) स्वपरप्रकाशकत्वायोगात् । (५) अन्यथा । (६) "तदुक्तमन्यत्र –दृश्यदर्शकयो यतस्तापाद्विमुच्येत तदर्थं च तपश्चरेत् ॥"–न्यायवि० वि०प्र० पृ० २३२ । (७) "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृत सर्ग ॥"–सांख्यका० २१ ।

प्रकृति[नि]वृत्तेः पुरुषकैवल्यासिद्धेः(ल्यसिद्धेः) प्रतिविहितम्। नहि मुक्तस्य संसारो नाम, अतिप्रसङ्गात्।

दोषान्तरमाह–अत एव पूर्व(र्वं) कैवल्यसिद्धेरेव। किम्? इत्याह–न कश्चित् इत्यादि। कुतः? इत्याह–तापेत्यादि। एतदेव भावयन्नाह–नहीत्यादि। सुगम(गमम्)। पुरुषस्तर्हि य[ते]त इति चेत्, अत्राह–दोषदर्शन इत्यादि। दोषाणां रागादीनां च दर्शनं तेषां दोषाणामपघातो विनाश[ः]तद्धेतुश्च सम्यग्दर्शनादिः प्रयतश्च(त्नश्च) ते एव स्वभावो यास्यस्ववासावेक(यस्य स चासौ एक)पुरुषश्च तदभावे क्षणिकत्ववत् कुतः प्रवृत्तिः। क्व? इत्याह–हेयोपादेयेष्विति।　५

निगमनमाह–तन्नेत्यादि।

स्वरूपमात्रवेदी सर्वज्ञ इत्येके। तत्राह–[सर्वज्ञ इत्यादि]　१०

[सर्वज्ञः सकलार्थ ¨ अशेषदोषावृतिच्छेदतः,
स्यात् करण　　¨　　पुनरत्ययात्।
ईहानन्तरभाविनां[तु वचसां] ¨ ¨ ¨ गतिः,
विज्ञेयान्यविलक्षणा च महतां ज्योतिर्गणानामिव ॥४३॥]

सर्वज्ञः स्याद् भवेत्। किंभूतः? इत्याह–सकलेत्यादि। स्वरूपमात्रवेदनस्य सर्वत्राविशेषात न तावता[अ]शेषज्ञ इति भावः। स्वभावतः स भवेदिति चेत्, अत्राह–अशेषदोषावृतिच्छेदानिति (दतः इति)। कया? इत्याह–करणेत्यादि। क्वादे (?) स्यादिति चेत्, अत्राह–अपुनरत्ययादिति (१) ननु यद्यसौ वति(वाग्)विवक्षावान्त(वान् भ) वेदिति न[स]कलदोषविच्छेदः। अथ न, किं तेनाऽनुपकारिणा इदिचे(इति चेत्? अ)त्राह–ईहानन्तरभाविनामित्यादि। स्वापादावन्यथा(२) भावादिति भावः। ननु वक्ता सर्वोऽपि रथ्यो(रथ्या)-पुरुषवत् सदोष इति चेत्, अत्राह–विज्ञेयेत्यादि। [४५८क] महताम् अशेषविदा गतिः अन्यविलक्षणा प्राक्तनपुरुषविलक्षणा ज्ञातव्या ज्योतिर्गण(णा)नामिव ॥ छ ॥　१५　२०

इति रविभद्रपादोपजीव्यनन्तवीर्यविरचितायां सिद्धिविनिश्चयटीकायां सर्वज्ञसिद्धिरष्टमः प्रस्तावः ॥ छ ॥

---

(१) मिथ्याज्ञानेऽपि। (२) विवक्षाभावेऽपि।

[प्रतीतेः इति] चेत्, एवं सति 'स्थूलोऽहम्' इति प्रतीतेः नात्मा शरीराद्भिन्नः स्यात्, कुन्तेभ्यो वा पुरुषाः[1] 'कुन्ताः प्रविशन्ति' इति प्रतीतेः। सहचरणाद् अत्राऽभेदोपचारश्चेत्, अन्यत्रै बाधकाभावादिति समानम्। हेतुफलयोस्तत्त्वादेव [४५९क] परस्परमभेदोपचारो भवति 'चक्षुषा पश्यति', 'अन्नं वै प्राणाः' इति, किमङ्ग पुनः वाच्यवाचकयोः न भवति ?

किं च, भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नधिकरणे प्रवृत्तिः सामानाधिकरण्याच्चाथ (ण्यम्, तच्च[2] अयं[4])गोशब्दयोरस्तीति तयोरेव ऐक्यं युक्त न गोशब्दार्थयोः[6] तदभावात्। न हि तयोरेकत्वार्थे (त्रार्थे) प्रवृत्तिः, तदपरस्याऽभावात्। एकविभक्तिकत्व तदिति चेत्, घटपटयोः स्यात् घटपटा (घटः पटः) इति प्रतीतेः। तादात्म्यं तदिति चेत्, तदसिद्ध तयोः, तदेव च साध्य साधनं चैं। तस्मादभेदोपचारेण अयं तत्र शब्द[ः] प्रवर्त्तते–अयं मासपिण्डो गोसञ्ज्ञः, तथा भेदेन च अस्य मासपिण्डस्य गौरिति संज्ञा।

अपरेषां तु परिहारः–'गौः शब्दो यस्य स गोशब्दः' इत्यस्य पदसमुदायस्य लुप्तो (प्ता) ऽन्तरावयवस्य प्रयोगः 'गौः' इति, यथा भीमसेने इति, तेषां म न युक्तः। सर्वत्र सञ्ज्ञाशब्देषु तथा कल्पनेन 'भीमसेनः' इत्याद्यपि न स्यात् अपि तु 'भीमसेनशब्दः' इत्यादि स्यात्। न चैवम्, तथा शाब्दिकानां व्यवहारादर्शनात्। केवलानां पदार्थाना सङ्क्षिप्य[10] योजनप्रतीतेः, अन्यथा 'गौः शब्दो यस्य' इत्यन्यपदार्थोऽपि न स्यात्, पृथक् पृथक् केवलयोः सिद्धयोरेव [11]तद्दर्शनात् चित्रगुः इत्यादिवत्। तन्न शब्दात्मका घटादय इति स्थितम्।

भवतु (न्तु) श्रुतेः गोचरा भावाः शब्दाः, ते तु नित्याः स्युरिति मीमांसकाः[12], तत्राह–**परिणता** इति। श्रुत्यगोचररूपपरिहारेण तद्गोचराकारेण गताः परिणता निरुच्यन्ते [४५९ख] अन्यथा पूर्ववत् पश्चादपि कुतस्तेषां श्रवणम् ? तदगोचरस्वभावत्वे ताल्वादिव्यापारात् पूर्वमपि चा (पूर्वमिव पश्चादपि अ) श्रवणम्। तद्गोचरस्वभावत्वे सेन्द्रियस्य प्रणिहितमनसः [13]पूर्वम[पि]श्रवणम्। व्यञ्जकाभावादिति चेत्, आस्तां तावदेतत्, अन्यत्र विचारणात्, अत्रापि लेशतो विचारयिष्यमाणत्वात् **'तदिमे परमाणवः'** इत्यादिना।

[ग]गनगुणाः शब्दाः इत्यपरे[14]। तत्राह–**परमाणवः** इति। रूपरसगन्धस्पर्शवन्तोऽतिसूक्ष्माः पुद्गलाः **परमाणवः** ते श्रुतिगोचरत्वेन परिणताः शब्दाः।

---

(१) न भिन्ना स्यु। (२) शब्दे। (३) शब्दसामानाधिकरण्यम्। (४) अयं शब्द-गोशब्दयो। (५) शब्दयोरेव। (६) गोशब्दगवार्थयोः। (७) स्यात्। (८) शब्दाख्यस्य। (९) भीमसेन शब्द सञ्ज्ञा यस्य स भीमसेन इत्यत्र 'शब्द' इति शब्द लुप्यते तथा 'गौ' इत्यत्रापि 'गौ शब्दो यस्य' इति शब्दशब्दस्य लोपो द्रष्टव्य। (१०) सञ्ज्ञावाचकेषु शब्देषु। (११) अन्यपदार्थप्रधानबहुव्रीहिदर्शनात्। (१२) "नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्। नित्य शब्दो भवितुमर्हति। कुत दर्शनस्य परार्थत्वात्। दर्शनमुच्चारण तत्परार्थं परमर्थं प्रत्याययितुम्। उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यान् अर्थं प्रत्याययितु शक्नुयात्, अतो न परार्थमुच्चार्येत। अथ न विनष्टस्ततो बहुश उपलब्धत्वात् अर्थावगम इति युक्तम्।"–जैमिनिसू०, शाबरभा० १।१।१८। शास्त्रदी० पृ० ५४०, ५५९, ५६८। नयवि० पृ० २४२। मी० श्लो० शब्दनि०। भाट्टचि० पृ० २६। तन्त्ररह० पृ० २६। बृह० १।१।१८। (१३) ताल्वादिव्यापारात्पूर्वमपि। (१४) "शब्दोऽम्बरगुण श्रोत्रग्राह्य।"–प्रश० भा० पृ० १४४। "आकाशश्च शब्दवानिति, स एव श्रोत्र तद्गुणश्च शब्द।"–प्रक० प० न्यायशु०।

सहकारिकारणम् ? तदभावे च कार्यं न दृष्टमिष्टं वा कस्यचित् । अदृष्टं सहकारिकारणं नोपादानमिति किंकृतो विभागः ?

किंच, ताल्वादीना तदुपादानत्वे तदुपमर्दः तद्भावे,उपादेयाकारगमनलक्षणत्वाद् उपादानस्य । अथ तद्भागाः केचन अदृश्याः तद्रूपतया परिणमन्ते, अपरे च तथाविधास्तत्र प्रविशन्ति, ततो न ततापितस्य(?)शब्दानां सर्वदिक्कं विसर्प[णमि]ति मतिः , सिद्धं तर्हि नः समीहितम ५ तद्भागानामेव परमाणुपदे(णुव्यपदे)शात् । कथमेवं[य]वा यदि नाम[अ]दृष्टबीजाः शाल्यङ्कुरः किं स्यादि उ(रे किं स्यात् येन स तदु)पादानो न स्यात् ? अन्यत्र बीजादर्शनादिति चेत् , पूर्वमदृष्टस्थूलकारणस्य तद्विपरीतहेतुपूर्वकत्वाऽदर्शनात् अन्यत्र समानम् ।

योऽपि मन्यन्ते(ते)–वायवीयः शब्दः इति , सोऽनुकूलमाचरति, पुद्गलपर्यायाऽनतिक्रमात्, वायोस्तत्परिणामत्वात् । निर्वाते च भूमिगृहादौ करताडनात् कुतः शब्दः ? स्तिमिताततः इति १० चेत्, एतदप्यनुकूलमेव । जातिमूकस्य च प्रमाण वाय(प्राणवायु)सद्भावेऽपि न शब्दः । तद्विशेषकल्पनाया चर(वरं)परमाणुकल्पनमस्तु दृष्टकल्पनाऽविशेपात इति ।

प्रत्येकं परिणताः प्रायेण स्युः इति चेत् , अत्राह–**संसर्गा**दिति । सन्तु ध्वनयः परस्परसंसृष्टपरमाणुपरिणामविशेषाः, [४६१क] वर्णादिस्फोटः तद्व्यङ्ग्यो नित्यो व्यापकोऽमूर्त्तः स्यादिति चेत् , अत्राह–**तद्भेद** इत्यादि। **तेषां** श्रुतिगोचरत्वेन परिणतानामणूना **भेदो** विशेषः । १५ किंभूतः ? इत्याह–**[प्रतिलब्ध इत्यादि] प्रतिलब्धो वर्णपदवाक्यात्मा** येन स तथोक्तः। एव मन्यते न श्रवणेन्द्रियग्राह्याकारादिव्यतिरेकेण ध्वनिः तद्ग्राह्यो वा वर्णस्फोटः प्रतीतिभाक् । एवं पदवाक्ययोर्वाच्यम् ।

ननु न श्रोत्रेन्द्रियाध्यक्षगम्योऽसौ अपि तु अर्थप्रतिपत्त्यन्यथानुपपत्त्या अर्थापत्तिगम्यः इति चेत् , अत्राह–**अभिलाप** इति । अभिलप्यते अनेन **इत्यभिलापः** वाचकः, **तद्भेदो** २० वर्णाद्यात्मा, तत एव अर्थप्रतीतिदर्शनात् । तथापि अन्यतः तत्कल्पने अनवस्था, ततोऽप्यन्यतः कल्पनासभवात ।

अथ एकपदार्थः वहुभिरयुगपद्भाविभिरस्थिरैर्घकारटकारविसर्जनीयैः प्रतियादयितुमसद्य

---

(१) अप्रत्यक्षीभूतम् । (२) ताल्वादिभागा । (३)अदृश्या. । (४) "तथा च शिक्षाकाराः आहु वायुरापद्यते शब्दतामिति"–शावरभा० १।१।२२ । (५) वायो । (६) जन्मजातमूकस्य । (७) "नानेकावयव वाक्यं पद वा स्फोटवादिनाम् । निरस्तभेद पदतत्त्वमेतत् "–स्फोटसि० श्लो० २९-३६ । स्फोटमा० पृ० १। स्फोट० न्या० पृ० १। "तत्त्वतस्तु वाक्यमेवाखण्डमयूराण्डकललवदविभाग भिन्नार्थप्रतीतिहेतुभूत स्फोटाख्यमभ्युपगन्तव्यम् ।"–स्फोटप्र० । "इत्यनवयव. प्रत्यस्तमितवर्णपदविभागो वाक्यस्फोट एव श्रेयान् ।"–स्फोटत० । स्फोटच० । "वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्य शब्द स्फोट इति तद्विदो वदन्ति । अत एव स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्य स्फुटति स्फुटीभवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थमुभयथा निराहु ।"–सर्वद० पृ० ३००। वैयाकरणभू० पृ० २९९। परमलघु० पृ० २। (८) स्फोट । "प्रत्येकमप्रत्यायकत्वात् साहित्याभावात् नियतक्रमभववर्तिनामयौगपद्येन सभूयकारित्वानुपपत्ते नानावक्तृप्रयुक्तेभ्यश्च प्रत्ययादर्शनात् क्रमविपर्यये योगपद्ये च । तस्माद् वर्णव्यतिरेकी वर्णेभ्योऽसभवन्नर्थप्रत्यय स्वनिमित्तमुपकल्पयति ।"–स्फोटसि०पृ०२८।

इत्येवेद (गमकम् इति पक्षे)भाव्यमिति[1] वदति न युक्तम् यतस्तदपि गकारमनभिव्यक्तं चेत्र प्रतीतिहेतुः, सर्वदा स्यात् इति गकाराद्युच्चारणमनर्थकम्। अभिव्यक्तं चेत् यदन्येनै स एव दोषः गकारादिवैफल्यमिति। गकारादिभिरिति चेत् तर्हि यथा प्रत्यासत्त्या गकारं(एक[2]) गकारादयन्ति वाचकम्, तथा अर्थम् इति किमपरेण ? न च नित्यस्य कस्यचिद्वस्तुत्वमिति निरूप-
५ यिष्यतेऽनन्तरम्।

किञ्च, एवं परम्परापरिश्रमश्च गकारादिभ्यो वाचकस्याभिव्यक्तिः, ततोऽर्थप्रतिपत्तिः [3]तेभ्योऽवगतौ न स्यात्। अनेकप्रतीतिप्रसङ्गश्च—पूर्वं व्यञ्जकस्य पुनर्व्यङ्ग्यस्य [४६१ख] पुनरर्थस्य। न चैवं व्यवहारः, तथापि तत्कल्पने धूमादग्न्यैः प्रतीयते तत्राग्निरपि स्यात्। एवं प्रत्यक्षेऽपि वाच्यम्। ततः **तद्गतोऽभिलाप स्वतः**। तत्राह—स्वतः अव्यवधानेन।

१० ननु तद्भेदेन किञ्चिदभिलप्यते ? न तावत् सामान्यम् तदभावात्, प्रयोजनाभावात्। नहि सामान्यं वाह(द)दोहाद्युपयुज्यते, विशेषाणामेव तत्रोपयोगात् 'आकृतिवदभिधानम् प्रवृत्तिः' इति न युक्तम् तथा(यथा)सामान्यप्रतीतौ स एव प्रसङ्गः[10]। विशेषगतौ सामान्यविरस्तु(ध तैरस्तु) न चैवम् अनुपलब्धेर्व्यतिरेकप्रसङ्गात्। ततः तद्भेदोऽनर्थक इति चेत् अत्राह—**सिद्धार्थं भाति** (इति)। सिद्धोऽर्थो यस्य स तथोक्तः **तद्भेदः**। तथाहि—यथा चक्षुरादिव्यापारात्
१५ अर्थ(र्थे)प्रतिपत्तिः प्रवृत्तिः प्राप्तिश्च तथा शब्दादपि इति, निरूपयिष्यते शेषमत्रैव।

अथ मतम्—प्रतिबन्धाऽभावात् कथमसौ अभिलापः[12] ? तथाहि—न शब्दार्थयोः तादात्म्यरूपः प्रतिबन्धः। अर्थाभावेऽपि भावात् न तदुत्पत्तिः। न च [13]तदन्यदस्ति इति तत्राह—**स्वतः सिद्धार्थं** इति। स्वतः स्वयोग्यतातः **सिद्धार्थो** नान्यतः। कुतः ? इत्यत्राह—**यमुपेत्य** इत्यादि। यं तद्भेदमुपेत्य श्रवणविषयतो नीत्वा वक्ति ब्रूते। कः ? इत्याह—
२० जनकभूता(जनः। किम्भूतः ?) **असङ्कीर्तितः** सङ्केतरहितः। पुनरपि किंभूतः ? **सामान्यवेदी** 'यमुपेत्य' इत्येतदत्राप्यपेक्ष्यम् यं श्रुत्वा तद्वेदी इत्यर्थः। सामान्याभावात् नैव(च) चेत्, न वस्तु[४६२क]समानपरिणामव्यवस्थापनात्। किं वक्ति ? इत्याह। **किमयमाह** इति। अयं वक्ता '**किमाह**' इत्येवम्। यदि प्रथम शब्दश्रवणात् सामान्यं तेन विदितं किमर्थमेवं ब्रूते ? नहि नीले स्वरूपेण ज्ञाते 'किमेतत्' इति तद्रूपे प्रश्नो युक्तः इति चेत् अत्राह—**भेद**
२५ इत्यादि। तस्य सामान्यस्य भेदोऽवान्तरविशेषः तस्य कात्स्न्र्यम् प्रतीतुमीहा तत्र **मना** यस्य इति।

---

(1) स्फोटेन। (2) "वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात्। आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्। अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावात्। एकस्मृत्युपारूढानां वाचकत्वे सरो रस इत्यादौ अर्थप्रतिपत्त्यविशेषप्रसङ्गात् तद्व्यतिरिक्तः स्फोटो नाम निरवयवो वाचकः।"—पा. महाभा. प्र. पृ. १६। स्फोट. व्या. पृ. २। सर्वद. पृ. २९९। (3) अभिव्यक्तं भवति तथा। (4) स्फोटम्। (5) स्फोटस्य। (6) गकारादिभ्य। (7) व्यक्तेः। (8) स्फोटस्य। (9) कश्चित् आभिलप्येत। (10) सर्वेण कथितं सामान्यम् तेन कथ्यते विशेष इति अभिधानपक्षम्। (11) प्रतिबन्धाभावादित्यतः। (12) वाचकः। (13) सम्बन्धान्तरम्।

ननु सामान्यवेदने भेदवेदनम्, अन्यथा सामान्यस्यापि कुतोऽनादात्म्येन[1], उभयात्मकं तत्त्वमिति, न तत्र[2] काङ्क्षणम्। तादात्म्योऽपि प्रथम सामान्यस्यैव कुत इव (एव) शब्दात्[3] स्यात् इति चेत्, अत्राह–**अक्षादिव**। क्व? **स्वार्थे** रूपादौ। यथैव हि दूरे अक्षात् मनुष्यत्वादिसामान्यप्रतीतिः, पुनः तद्भिदा[4]काङ्क्षणम्, पुनरपि देशनैकट्यादिसामग्रीवशात् तद्भेदावायः। तदुक्तमत्रैव "समदृष्टेर्विशेषेहा" [सिद्धिवि० २।९] इत्यादिना। तथा शब्दातु (त्) प्रथमं सामान्यप्रतीतिः पुनः तद्भेदाकाङ्क्षणम् ततोऽपि सङ्केतसामग्रीतो भेदनिश्चयौ (यो) नैतावता शब्दः स्वतोऽशक्तः, अक्षेऽपि प्रसङ्गात्। यथा च शब्दात् स्वार्थसन्देहः तथा अक्षादपि। कारणस्य रूपवत् सामर्थ्यप्रतिपत्तावपि तत्र सन्देहदर्शनात्। अथ तत्र ज्ञानान्तरं सन्देहरूपम्, अन्यत्रापि तदेव[6]। नहि घटाभिधानादेव घटो (घटोऽस्ति) नास्तीति वा सन्देहो जायमानो जनेन विभाव्यते, ततोऽप्रवृत्तिप्रसङ्गात्। अथ शब्दादर्थप्रतीता वत् सुतोपि (तीतौ तत एव) कुतः सन्देहः? स्वसंवेदनात् दानादिचेतसा स्वर्गप्रापणसामर्थ्यप्रतीतौ ततोऽपि [४६२ख] सं कुतः। अथ तद्भावाभावयोः तत्प्रतीते[:] साधारणत्वात् स इति मतिरि तत्र (तिः, इतरत्र) समानम्। तथा सति कथं 'शब्दोऽर्थविषयः' इति[8] अनेन निरस्तम्। निर्विकल्पिका तत्प्रतीतिस्ततोऽयमदोषः[9], चेतनत्वादपि (त्वादावपि) स्यात्। [10]तत्र निर्णयोत्पत्तेर्नेति चेत्, [11]"यस्य रूपमुदागौ निर्णयरूपं मानसमध्यक्षं तस्य तत्सामर्थ्येऽपि दुर्लभः संशयः। इतरथा शब्दार्थेऽपि स तथा न भवेत्। [12]यस्यापि मानसो[ऽ] विकल्पो[ऽ]निश्चयः, तेन तस्य स्वलक्षणग्रहणात्, अविकल्पेन गृहीतस्य अगृहीतकल्पत्वात् [13]तथा। यथा शब्दा (ब्दोऽ) वस्तुविषयः सन्देहहेतुत्वात्, तथा प्रत्यक्षमपि [14]परस्य। ततोऽक्षात् सामान्यग्रहणात् विशेषाकाङ्क्षणे विशेषाऽवायकारणाभावे यथा संशीतिः तथा शब्दादपि इति स्थितम्।

स्यादेतत्–भाषान्तरे संकीर्तित (सङ्केतितत[15]) एव शब्दात् सामान्य प्रतिपद्यते[न] अकृतसङ्केतात्, ततः सङ्केत एव पारम्पर्येण तद्धेतुरिति, तर्हि इन्द्रियादपि पूर्वं प्रतिपन्नसामान्य एव[16]–ततः पुनः सामान्यं प्रत्येति इति। तदेवेन्द्रियमन्यदापि तद्ग्रहणकारणम्। अत्य (अन्य) त्वमन्यत्रापि इति यत्किञ्चिदेतत्।

नमु (ननु) निःप्रयोजनशब्दस्वरूपपरीक्षणेन किम्? लोकत एक (एव) तत्स्वरूपसिद्धेः, इत्यत्राह–**निःश्रेयसाधिगतेः** इत्यादि।

किमाह इति चेत्? अत्राह–**शब्द** [४६३क] इत्यादि।

**[[17]शब्दः पुद्गलपर्यायः स्कन्धः छायातपादिवत्।**
**बुद्धिकार्यो विशेषात्माभिलापः स्वार्थगोचरे ॥२॥**

---

(१) वेदनमिति। (२) विशेषे। (३) वेदनम्। (४) भित भिदा भेद इति यावत्। (५) सामर्थ्यज्ञापक ज्ञानम्। (६) शब्दान्तर यत् सन्देह करोति। (७) सन्देह। (८) मतम्। (९) सन्देहाभावलक्षणो न दोष। (१०) चेतनत्ववादी। (११) मीमांसकस्य। (१२) बौद्धस्य। (१३) सन्देहाभाव स्यात्। (१४) बौद्धस्य। (१५) सङ्केतितात् इत्यर्थ। (१६) पुरुष। (१७) "तथा चाहुर कलङ्कदेवा–शब्द पुद्गलपर्याय. स्कन्ध छायातपादिवत्।"–त० श्लो० पृ० ४२४।

अपर आह–तीव्रत्वमन्दत्वजातिसम्बन्धात् तत्प्रत्ययविषयत्वं[1] ने(यते)ति, सर्वत्र तथा प्रसङ्गेन स्पर्शाभावप्रसङ्गात्।

शब्दसहचरितस्य वायोः तद्विषयता[2] इत्येके, तेषामपि वाय्व(य्व)सहचरितस्य[3] अन्यस्य[4] तद्विषयता इत्येवमनवस्था[४६३ख]।

स्यान्मतम्–असर्वगतद्रव्यपरिमाणं मूर्त्तिः[5] न स्पर्शवत्त्वम्, अन्यथा मनसोऽमूर्त्तत्वं स्यात् तदभावादिति, तन्न, शब्देऽप्यस्य भावा[त्] स्पर्शवत्त्वा[त्]द्रव्यत्वमसर्वगतत्वं केचास्य(त्वं च केनास्य)वार्यते? परिमाणं दीर्घादिप्रतीतिविषयत्वात् सुप्रसिद्धमेव।

किंच, तल्लक्षणम[6] अतिप्रसक्ति, तस्य आत्मन्यपि भावात् सर्वगतत्वनिषेधात्तत्र। ततः सिद्धम् मूर्त्तत्वम्। अस्मदादिप्रत्यक्षत्वम् अविप्रतिपत्तिविषयम्।

नापि 'साव[यव]त्वात्' इत्यसिद्धम्, सावयवो ध्वनिः अल्पमहत्त्वग्रहणग्राह्यत्वात्[7] स्तम्भादिवत्। अथ व्यङ्ग्ये व्यञ्जकधर्मारोपात् तद्ग्रहणग्राह्यता न स्वतः, मुखस्येव दर्पणादौ इति चेत्, स्यादेतदेवम्–यदि एकरूपः सर्वदा शब्दः कुतश्चित् स्यात्। न च दृष्टान्तमात्रात् साध्यं सिध्यति, अतिप्रसङ्गात्। अतः स्कन्धः शब्दः।

नन्वेवं लोष्टादिनेव शरीरावयवादिघातैः(तः)तेन[9], तद्वतस्य[10] नियतदेशगमनम्, एकत्र कर्ण(र्ण)प्रविष्टस्य[11] तदन्तराऽगमनम्, वायुनाभिहतस्य लोकान्तप्रसर्पणम्, इन्द्रियान्तरेण च दर्शनम्[12] इति[13] चेत्, अत्राह–**छाया** इत्यादि। **आदि**शब्देन अन्धकारादिपरिग्रहः, तेन तुल्य वर्त्तते इति तद्वत् इति। यथा अत्र[14] न ते दोषाः तथा शब्देऽपि इति दृष्टान्तार्थः। नहि अन्धकारस्य स्कन्धेऽपि स्पर्शादिना ग्रहणम्।

अपौरुषेयः शब्दो गकारादिः इत्येके[15]। तत्राह–**बुद्धि** इत्यादि। **बुद्धेः कार्यं** तदन्वयव्यतिरेकानुविधानात्। न हि यद् यस्य अन्वयव्यतिरेकावनुविधत्ते [४६४] तद् अन्यहेतुकमहेतुकं वा युक्तमतिप्रसङ्गात्। तदभिव्यक्तिः तावनुविधत्ते इति चेत्, न, अनवस्थाप्रसङ्गात्, तत्रान्यस्य तदनुविधानकल्पनात्। कृतप्रतिक्रियश्चायं[16] पक्षः अन्यत्र। स एव

(१) "अनित्यः शब्दः तीव्रमन्दविषयत्वात् सुखदुःखवदिति।"–न्यायवा० पृ० २००। (२) तीव्रादिप्रत्ययविषयता। तुलना–"नादवृद्धि परा। १७। यच्चैव बहुभिर्भेरीमाध्नद्भिः गोशब्दमुच्चारयद्भिः महान् शब्दः उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते, नैवम्, निरवयवो हि शब्दः अवयवभेदानवगमात्। निरवयवत्वाच्च महत्त्वानुपपत्तिः। अतो न वर्धते। तेन नादस्यैषा वृद्धिः न शब्दस्येति।"–जैमिनिसू० शाबरभा० १।१।१७। (३) शब्दस्य। (४) कस्यचित् अदृष्टस्य। (५) "असर्वगतद्रव्यपरिमाणं मूर्तिरिति हि पदार्थविदः।"–तत्त्वार्थश्लो० पृ० १७८। (६) मूर्तत्वलक्षणम्। (७) अल्पत्वमहत्त्वग्रहण। (८) "न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवृत्तिनी। बुद्धितीव्रत्वमन्दत्वे महत्त्वाल्पत्वकल्पना। सा च पट्वी भवत्येव महातेजःप्रकाशिते। मन्दप्रकाशिते मन्दा घटादावपि सर्वदा। एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम्।"–मी० श्लो०, शब्दनि० पृ० ७८५। (९) शब्देन। (१०) शब्दस्य। (११) कर्णान्तर। (१२) स्यात्। (१३) तुलना–"पुद्गलत्वभावत्वे दर्शनविस्तारविक्षेपप्रतिघातकर्णपूरणैकश्रोत्रप्रवेशाद्युपालम्भो गन्धपरमाणुकृतप्रतिविधानतयोपेक्षामर्हति।"–अष्टश०, अष्टस० पृ० १०८। (१४) छायायां पुद्गलरूपत्वेऽपि। (१५) मीमांसकाः। (१६) शब्दाभिव्यक्तिवादपक्षः।

*"अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे ।
उक्तास्ते सञ्चिताः ते हि निमित्तं ज्ञानजन्मनः ॥
अणूनां स विशेषत्वा(पश्च)नान्तरेण(णाऽ)परानणून् ।"

[प्र० वा० २।१९५-९६] इत्यभिधानात । [४६५क]

ते चासंसर्गिणः संसर्गरहिता एव । किं पुनर्नैव पृथक् ? पृथक्का(पृथग् व्य)वस्थिताः– ५ तद्रहिताः, सञ्चितास्तु संसर्गिणः, अन्यथा स्तम्भादौ अधो मध्योर्ध्वतिर्यग्भागादिषु अविच्छिन्ना प्रतिपत्तिरिति नैयायिकं प्रति एतद् दूषणमसङ्गतम्–*"अविच्छिन्ना न भासेत ततस्तत्संवि- (त्संवि)त्तिः क्रमग्रहे ।" [प्र० वा० २।२५६] इति तत्संवित्तिः ।

ननु च रूपादिग्रहणे सहैव सुखादिग्रहणमुपलभ्यते इति चेत, स्तम्भादौ भागप्रतिपत्ति- रविच्छिन्ना तथैव उपलभ्यते इति समानम् । १०

अपरः प्राह–नाविच्छेदप्रतिभासनात्तेषाम् अविच्छेद[स्य]सिद्धिः, तदभावेऽपि दूरस्थित- विरलकेशादौ[3] तत्प्रतिभासनादिति, तस्यापि तेषा[तथा]प्रतिभासने यदवभासते अविच्छिन्नं रूपं न तत्तेषाम, यन्नावभासते विच्छिन्नं तत्तेषामिति प्राप्तम । तथा च संवेदने प्रतिभासमानं स्ववेदनं तद्रूपं न भवेत् । तदभावे तदभावे इति चेत, कुत एतत ? तद्रूपत्वात्तस्य इति चेत, तदपि कुतः ? तथावभासनात, अन्यत्र समानम्, अबाधनं च । न चैकत्र तदभावेऽपि तत्प्रतिभास- १५ दर्शनात सर्वत्र तथा कल्पनम्, अतिप्रसङ्गात् । परमाणवो नावभासन्ते इति चेत, कुतो ग्राह्याः ? ज्ञानकारणत्वात्[6], चक्षुरादौ प्रसङ्गः । स्वाकारसमर्पणात्[7], ज्ञानात्मनि तदाकारोऽ- न्योऽन्यविच्छिन्नः, तस्यैव समर्पणमिति स एव दोषः । [8]नीलतादिमात्रसमर्पणे, सांशता इति न पूर्वपक्षाद्विशेषः ।

किंच, तेषामप्रतिभासने [४६५ख] किं कल्पनेन ? नीलादिज्ञानं तु अन्यत एव रूपादि- २० रूपाद्ग्राह्यतः स्यात् । ते[9] स्वयमविच्छेदविकलाः अविच्छिन्नं ज्ञानं जनयन्ति नान्यद् अरूपादि- स्वभावं रूपाद्याकारं ज्ञानमिति किं कृतमेतत् ? तस्मात् परमाणूनामभ्युपगमे तत्प्रतिभासोऽभ्युप- गन्तव्यः । स च अविच्छिन्न इति तेऽपि तथेति साधूक्तम्–'किंपुनरसंसर्गिण एव' इति ।

दूषणान्तरमभिधातुं पूर्वपक्षमुत्थापयति–स्युरिति भवेयुः 'असंसर्गिणः' इत्यत्र वर्त्तते । उत्तरम्–कथम् इत्यादि । तेषां सञ्चितपरमाणूना व्यवधानं विजातीयावस्थानम(याव्यवधानम् २५ अ)न्तराले तस्याऽभावात । एतदपि कुतः ? इत्याह–प्रकृत इत्यादि । प्रकृतो विकल्पो व्यवधा- यकव्यवधीयमानयोः संसर्गोऽसंसर्गो वा तस्याऽनतिवृत्ति(त्तेः) [10]एकत्र प्रतिज्ञाहानिः, [11]अन्यत्र अनवस्था–पुनरपि अपरापरव्यवधानकल्पनात् । यदि वा, प्रकृतो विकल्पः 'सर्वथा अन्यथा' इति तस्यानतिवृत्तेः व्यवधानेऽपि । भवतु तेषां व्यवधानाभावः, ननु प्रसङ्गः षडंशतापत्तेरिति

(१) बौद्धेनोक्तम् । (२) अविच्छेदाभावेऽपि । (३) "यथा विरलदेशस्था अपि केशमशकमक्षिकादयः एकघनाकारं प्रत्ययमुपजनयन्ति ।"–प्र० वार्तिकाल० पृ० १४। (४) परमाणूनाम् । (५) सवेदनाभाव । (६) इति चेत्; । (७) इति चेत्, । (८) यद्यपि नीलता जडता च स्त, तथापि केवलं नीलतायाः ज्ञाने समर्पणम् । (९) परमाणवः । (१०) संसर्गस्वीकारे । (११) असंसर्गपक्षे ।

विशेषे(षो)पर्यायविशेष आत्मा यस्य स तथोक्तः । अनेन तद्व्यतिरिक्तः स्फोटो मा निरस्तः । कुतः ? इत्याह–**अभिलापः** स एव यतोऽभिलप्यतेऽनेन इति । क्व ? इत्याह–**स्वार्थगोचरे** सामान्यविशेषात्मके वस्तुनि व्यञ्जनपर्याये वा ।

'शब्दः पुद्गलपर्यायः' इत्यत्र साम्प्र(म्प्रे)सूरेर्मनसि 'मूर्तिमत्त्वात्' इति हेतुर्वर्तते । निदर्शन-मुक्तमेव । तस्य परमाणुभिर्व्यभिचारः, न हि ते मूर्तिमत्त्वेऽपि तत्पर्यायाः ततः परस्य सूक्ष्मस्य तस्य अभावादिति । तं परिहरन्नाह–भणच इत्यादि । कुतः ? इत्यत्राह–[पुद्गल]परिणाम-विशेषात् । पुद्गलस्य परिणामोऽन्यथाभावः, स एव विशेषः स्थूलैकस्य सूक्ष्मनानारूपभेदः, सूक्ष्मनानारूपस्य वा स्थूलैकरूपभेदश्च तस्मात् । तदपि कुतः ? इत्याह–भेद इत्यादि । भेदो नानात्वम् संसर्गः एकत्वपरिणामः तयोः प्रतीतेः । एतदुक्तं भवति–यथा अनेकस्मात् अल्प-परिमाणात् संसृष्टाद् एक(कं) महत्त्वोपेतं जायमानं प्रागस[त्] दृष्टमिति तत्कार्यम्, तथा एकस्मात् महत्त्वोपेतात् तद्विपरीतं प्रागसत् कपालादि दृष्टम् तत्कार्यमस्तु अविशेषात् । अथ कपालादीनां प्रागपि भावात् न तत्कार्यता तादृग्व्यपदेशनमायातम्, घटादेरपि तथा भावप्रसङ्गात् । अदर्शनान्नैवं चेत् तदन्यत्र समानम् । तन्तवः [४६४ख] पटे दृश्यन्ते इति चेत् न, तथा पटस्यैव(वाऽ)भावात्, अन्यथा (वाऽसौ गतः) सौगतशासनम् । ततोऽन्य इति चेत् न तस्यैं पक्षस्य निषेधात् ।

किंच यदि घटकाले ततो भिन्नानि कपालानि सन्ति, तेषां तेन सह तत्पदेशे समवायि-कारणत्वम् अन्योऽन्यमिव । तेषां प्रागपि भावान्नेति चेत् तथा घटस्यापि प्राग(ग्) भावोऽस्तु । प्रमाणबाधकत्व(नम् च)मयत्र । अनुमानात् तत्साधनान्न तद्बाधनम् घटोऽपि महाकारणपूर्वक घटवत्किन्नेष्यते ? तत्र स्थूलस्य भावे सूक्ष्मस्यादर्शनम् । तन्तूनां वैचर्त्यं स्यादिति चेत्, अत्र मृत्पिण्डस्य इति समानम् ।

ननु मृत्पिण्डस्य घटकारणत्वे तत्र स्थितस्य घटस्य उपलब्धिः तन्तुस्थितपटवत् इति चेत् न कार्यकारण(कारेण)परिणतस्य उपादानत्वोपगमात् । तन्तवोऽपि पटीभवन्ति । ततो यथा बहूनां संसर्गादेकं तथा तस्य विश्लेषादनेकमिति कथन्न परमाणवः तत्पर्यायाः ?

अत्राह सौगतः–कथमित्यादि ? तमाचार्यः पृच्छति–कं(कथं) च न स्यात् इति । स उत्तरमाह–सर्वथा इत्यादि । अन्य ॥(अन्येन) कथञ्चित् सम्बन्धस्य प्रकारेण निरंशानां परमा-णूनां दिग्भागभेदेन प्रत्येकं षडंशतापत्तेः 'कथं संसर्गः ? परिहारोऽत्र–किं पुनः असंसर्गिण एव इत्यभिप्रायः । एवं संसर्गं दूषयताऽपि तेन बहिरर्थमभ्युपगच्छता बहीरूपादिपरमाणवोऽभ्यु-पगता एव–

---

(१) तद्विशेषात्मा । (२) परमाणवः । (३) [illegible] । (४) अनेकमल्पपरिमाणमेकत्वं । (५) इति चेत् । (६) भावो । ( ) [illegible] । (८) घटे । (९) घटे । (१०) स्यात् । (११) [illegible] । (१२) "[illegible] परमाणोः [illegible] [illegible]" [illegible]

*"अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे ।
उक्तास्ते सञ्चिताः ते हि निमित्तं ज्ञानजन्मनः ॥
अणूनां स विशेषत्वा(पश्च)नान्तरेण(णाऽ)परानणून् ।"

[प्र० वा० २।१९५-९६] इत्यभिधानात । [४६५क]

ते चासंसर्गिणः संसर्गरहिता एव । किं पुनर्नैव पृथक् ? पृथका(पृथग् व्य)वस्थिताः– ५ तद्रहिताः, सञ्चितास्तु ससर्गिणः , अन्यथा स्तम्भादौ अधो मध्योर्ध्वतिर्यग्भागादिषु अविच्छिन्ना प्रतिपत्तिरिति नैयायिकं प्रति एतद् दूषणमसङ्गतम्–*"अविच्छिन्ना न भासेत ततस्तत्संवि-(त्संवि)त्तिः क्रमग्रहे ।" [प्र० वा० २।२५६] इति तत्संवित्तिः ।

ननु च रूपादिग्रहणे सहैव सुखादिग्रहणमुपलभ्यते इति चेत , स्तम्भादौ भागप्रतिपत्ति-रविच्छिन्ना तथैव उपलभ्यते इति समानम् । १०

अपरः प्राह–नाविच्छेदप्रतिभासनात्तेषाम् अविच्छेद[स्य]सिद्धिः, तदभावेऽपि दूरस्थित-विरलकेशादौ[3] तत्प्रतिभासनादिति , तस्यापि [4]तेषा[तथा]प्रतिभासने यदवभासते अविच्छिन्नं रूप न तत्तेषाम , यन्नावभासते विच्छिन्न तत्तेषामिति प्राप्तम । तथा च संवेदने प्रतिभासमानं स्ववेदनं तद्रूपं न भवेत् । तदभावे तदभावे इति चेत् , कुत एतत ? तद्रूपत्वात्तस्य इति चेत् , तदपि कुतः ? तथावभासनात , अन्यत्र समानम् , अबाधनं च । न चैकत्र तदभावेऽपि तत्प्रतिभास- १५ दर्शनात् सर्वत्र तथा कल्पनम् , अतिप्रसङ्गात् । परमाणवो नावभासन्ते इति चेत् , कुतो ग्राह्याः ? ज्ञानकारणत्वात्[6] , चक्षुरादौ प्रसङ्गः । स्वाकारसमर्पणात्[7] , ज्ञानात्मनि तदाकारोऽ-न्योऽन्यविच्छिन्नः, तस्यैव समर्पणमिति स एव दोषः । [8]नीलतादिमात्रसमर्पणे , साशता इति न पूर्वपक्षाद्विशेषः ।

किंच, तेषामप्रतिभासने [४६५ख] किं कल्पनेन ? नीलादिज्ञानं तु अन्यत एव रूपादि- २० रूपाद्ग्राह्यतः स्यात् । ते[9] स्वयमविच्छेदविकलाः अविच्छिन्न ज्ञान जनयन्ति नान्यद् अरूपादि-स्वभावं रूपाद्याकारं ज्ञानमिति किं कृतमेतत् ? तस्मात् परमाणूनामभ्युपगमे तत्प्रतिभासोऽभ्युप-गन्तव्यः । स च अविच्छिन्न इति तेऽपि तथेति साधूक्तम्–'किंपुनरसंसर्गिण एव' इति ।

दूषणान्तरमभिधातुं पूर्वपक्षमुत्थापयति–स्युरिति भवेयुः 'असंसर्गिणः' इत्यत्र वर्त्तते । उत्तरम्–कथम् इत्यादि । तेषां सञ्चितपरमाणूना व्यवधानं विजातीयावस्थानमं(याव्यवधानम् २५ अ)न्तराले तस्याऽभावात् । एतदपि कुतः ? इत्याह–प्रकृत इत्यादि । प्रकृतो विकल्पो व्यवधा-यकव्यवधीयमानयोः संसर्गोऽससर्गो वा तस्याऽनतिवृत्तिः(त्तेः) [10]एकत्र प्रतिज्ञाहानिः, [11]अन्यत्र अनवस्था–पुनरपि अपरापर व्यवधानकल्पनात् । यदि वा, प्रकृतो विकल्पः 'सर्वथा अन्यथा' इति तस्यानतिवृत्तेः व्यवधानेऽपि । भवतु तेषां व्यवधानाभावः, ननु प्रसङ्गः षडंशतापत्तेरिति

(१) बौद्धेनोक्तम् । (२) अविच्छेदाभावेऽपि । (३) "यथा विरलदेशस्था अपि केशमशकमक्षिकादयः एकघनाकार प्रत्ययमुपजनयन्ति ।"–प्र० वार्तिकाल० पृ० ९४। (४) परमाणूनाम् । (५) सवेदनाभाव । (६) इति चेत् , । (७) इति चेत् , । (८) यद्यपि नीलता जडता च स्त, तथापि केवलं नीलतायाः ज्ञाने समर्पणम् । (९) परमाणव । (१०) ससर्गस्वीकारे । (११) अससर्गपक्षे ।

चेत्, अत्राह—न वै कस्यचित् इत्यादि । [न वै] कस्यचित् मध्यवर्तिनः परमाणोः(णोः) कैश्चित् दिग्भागव्यवस्थितैः परमाणुभिः नैरन्तर्येऽपि सांशत्वम् । कुतः ? इत्याह—व्यवधाना भावस्यैव तत्संयोगात्मकत्वात् । तच्छब्देन परमाणुपरामर्शः । एतदपि कुतः ? इत्याह—पारिमण्डल्यम् इत्यादि ।

५ ननु सर्वैरयमभावस्य नैर्गुण्यात्मकत्वात् संयोगस्य च गुणात्मकत्वात् [४६६क] कथमुच्यते 'व्यवधानाभावस्यैव संयोगात्मकत्वात्' इति चेत्; न; अव्यवहिताङ्गुलिद्वयसन्निधिरेकेण तेदप्रतीतेः, व्यवधानाभावे एव संयोग इत्यभिधानप्रवर्तनात् ।

किञ्च, अवयवेभ्योऽवयविन इव संयोगिभ्योऽस्याऽभेदे नैकान्तपक्षे घाताघातकपक्षवत्(वं स्यात्) । एवं सति अवयविनो वैयर्थ्यम्, तत्कार्यस्यास्य अत एव सिद्धेरिति चेत्, अवयवपरेऽस्य
१० दोषोऽस्तु । तस्यापि प्रतिभासनात् नैवं चेत्, न घटाद्यवयवेभ्योऽभिन्नपदार्थस्य[प्र]तिभासविरहात् । एको हि अवयवरूपाद्यात्मकः प्रतीयते, स संयोगः अवयवी वा भवतु । संयोगस्य अवयवित्वे अनेकमणानामपि(मणि)समूहोऽवयवी भवेत् इति, निरन्तरमणिगणाव्यवस्थसमूहो वा इति चेत् अयमपि तस्यैव दोषोऽस्तु येन तेभ्योऽभिन्न एकः संयोग इष्यते नाऽस्माकं येषां व्यवधानाभावं संयोगमिच्छताम् । तन्न एतेभ्योऽभिन्नः स इति चेत् उक्तमत्र समवायनिषे-
१५ धात् सम्बन्धाऽसिद्धिरिति ।

तेभ्य उत्पद्यते स तेषामिति चेत्; अत्रेदं विचार्यते—निरन्तराः सन्तः ते तं जनयन्ति, अन्यथा वा ? प्रथमपक्षे अवयविनमेव ते जनयन्तु किं संयोगजननेन परम्परापरिश्रमकारणात् । तथा दृष्टेरदोषश्चेत् स्यादेतोपः यदि तथादर्शनं न भवेत्; न चैवम्, नहि ते पूर्वं संयोगं पुनः अवयविनं जनयन्तः प्रतीयन्ते । आशुवृत्तेस्तथाप्रतीतिरिति चेत्; युगपद् इयमस्तीति इत्युत्तरं
२० स्यात् न चास्ति अन्यथा संयोगमपि परं तदुत्पाद्य जनयन्तीति प्राप्तम् । [४६६ख] द्वितीयेऽपि दूरस्थिताः तमुपजनयन्तु तत्रापि तन्निमित्तक्रियाभावात् । तत्[ः]स्थितम्—व्यवधानस्यैव इत्यादि ।

अपरे आहुः—नास्माभिः ज्ञानस्य अन्यस्य वा परमाणवः आरभमाणाः अभ्युपगम्यन्ते स्वयं तन्नि-षेधात्, तन्नि(तन्न) युक्तम्—'किं पुनः' इत्यादि । तत्राह—क्षणवदित्यादि । क्षणवत् इति सामान्ये
२५ न वचनेऽपि ज्ञानक्षण [ए]व इह गृह्यते, तस्यैव परेण परमार्थेनाभ्युपगमात् क्षणस्य इव ज्ञात, न वै कस्यचित् कैश्चित् नैरन्तर्येऽपि सांशत्वम् । किं कुर्वतः क्षणस्य ? इत्याह—अनुभवतः । किम् ? इत्याह—नैरन्तर्यम् । केन ? इत्याह—स्वकार्यकारणक्षणाभ्याम् । स्वशब्देन दृष्टान्तीकृतो मध्यक्षणो गृह्यते तस्य कार्यक्षण उत्तर उपादेयक्षणः कारणक्षणः उपादानक्षणः, ताभ्याम् । कुतः तदनुभवतः ? इत्याह—स्वत एव न संयोगादेः इत्यर्थः । एतदपि कुतः ? इत्यत्राह—काल
३० इत्यादि । कालप्रत्ययभेदः ज्ञानस्यामनानात्वम् तस्य उपलक्षणात् । अस्यानभ्युपगमे पूर्वा-

(१) गुणरहितत्वात् । (२) संयोगस्याप्रतीतेः । (३) संयोगस्य । (४) घटाद्यवयवकार्यत्वे । (५) अवयविनोऽपि । (६) परमाणवः । (७) संयोगम् । (८) 'च' इति निरर्थकम् ।

माह–अन्यथा इत्यादि । नैरन्तर्याभावप्रकारेण अन्यथा कार्यकारणव्यवस्था उपादानोपादेययोः सङ्करादि[1]परिहारेण स्थितिरेव मा भूत् ।

भवेन्मतम्–'जाग्रत्प्रबोधज्ञानवत् वस्तुस्वभावत एव अन्यत्रापि नैरन्तर्याभावेऽपि तद्व्यवस्था[2]' इति, अत्रोक्तमुत्तरम् । त[3]दन्तरं वक्तुमाह–वस्तुस्वभावतः इत्यादि । वस्तु कार्यकारणे तयोः स्वभावो योग्यता ततः तद्व्यवस्थायां कार्यकारण[४७७क]व्यवस्थायाम् । कुतः ५ कारणात् संयोगप्रबन्धः । किमेकदेशेन सर्वात्मना वा संयोगः ? इत्याह–तत्संयुक्ता[:]स्वपरमाणवः तेषां पराभ्युपगमादेवमुक्तम्, परमाणवोऽपि क्षणवस्तुस्वभावत एव संसर्गरहिताः स्थूलमेकं परिणाम(मं) बिभ्रति इति मन्यते । सर्वेषां तत्प्रसङ्ग इति चेत्, क्षणानामपि समानम् । शक्यं हि वक्तुम्–भिन्नकालं यावत् प्रबोधस्य जाग्रद्विज्ञानं कारणं तावत् अतीतजन्मान्तरज्ञानं कुतो न भवति ? अन्यत्[4], उभयत्र समानम् । तन्तवस्तर्हि पृथगवस्थिताः कुतो न पटकारणम् १० इति चेत् ? जाग्रद्विज्ञानवत् कस्मान्न अग्निः धूमस्य कालव्यवहितः कारणम् ? तथा[ऽ]दर्शनम् अन्यत्राप्युत्तरम् । एतदेवाह–अविशेषप्रसङ्गात् तद्व्यवस्थायाः स्वपरपक्षयोरिति ।

इदमपरं व्याख्यानम्–यद्यपि ततः क्वचिद् व्यवधानेऽपि तद्व्यवस्था, तथापि तत्संयुक्तानां तेन मध्यक्षणेन संयुक्तानाम् अव्यवधानेन व्यवस्थितानां पूर्वापरक्षणानां धारावाहिनां कुतः संयोगः(ग)प्रबन्धः ? संयोगेन व्यवधानाभावे प्रबन्धः प्रवाहः कुतो न स्यात् ? इत्याह– १५ अविशेषप्रसङ्गात् अविशेषेण प्रसङ्गाद्दोषात् देशप्रचयवत् कालप्रचयेऽपि दोषादित्यर्थः ।

अथवा, यदुक्तं परेण–*"किं स्यात् सा चित्रतैकस्याम्" [प्र० वा० २।२१०] इत्यादि, तत्राह–कुतः इत्यादि । तेन विवक्षितनीलज्ञानपरमाणूना संयुक्तानामपि न(मवि)निर्भागवृत्तिभाजाम् अन्येषां नीलज्ञानपरमाणूनां कुतः[४६७ख]संयोगेनाविनिर्भागेन प्रबन्धः प्रकृष्टो विच्छेदरहितो बन्धः सहवर्त्तनं कुतो न स्यात् ? इत्याह–अविशेष इत्यादि । २०

स्यान्मतम् सौगतमते न क्वापि केनचित् किञ्चित्संयुक्तम्, इत्यत्राह–स्वतः इत्याद्य(दि । अयम)भिप्रायः–नैरन्तर्याभावे सान्तरत्वं प्रसक्तम्, तच्च व्यवधायके सति नान्यथा, तस्य स्वत एव अन्यनिरपेक्षस्य प्रदेशमात्रस्य निरंशस्य व्यवधायकताया उपपत्तेः नवै कस्यचित् कैश्चिन्नैरन्तर्येऽपि सांशत्वमिति उपपत्तेः इति । अनेन तदनभ्युपगमे अनवस्था स्यादिति दर्शयति ।

मा भूत् कार्यकारणव्यवस्था तथापि न दोषः, प्रतिभासाद्वैतवादिना तदभ्युपगमादितिचेत्, अत्राह–अनं संख्यादि(शस्यापि) इत्यादि । न केवलं सांशस्य अपि तु अनंशस्यापि २५ स्वभावभेदात् 'नवै' इत्यादि सङ्गतिः । निदर्शनमत्र ग्राह्य इत्यादि ।

निगमनमाह–तदिमे इत्यादि । कुतः ? इत्याह–नहि इत्यादि । तदपि कुतः ? इत्यत्राह–प्रतिपिद्धं च इत्यादि ।

वैशेषिकः प्राह–गुणः शब्दः निषिध्यमानद्रव्य कर्मत्वे सति सत्तासम्बन्धित्वात् रूपादिवत् । ३०

(१) आदिपदेन व्यतिकरः । (२) कार्यकारणव्यवस्था । (३) परिहारान्तरम् । (४) अन्यत्वमित्यस्मिन्नर्थे'अन्यत्' इति । (५) द्रष्टव्यम्–पृ० ६० टि० १० । (६) "शब्दः क्वचिदाश्रितः गुणत्वात्"–प्रश० व्यो० पृ० ३२२। "न द्रव्यकर्मजातीयः शब्दः श्रोत्रग्रहणयोग्यत्वात् शब्दत्वादिवत् । गुणः शब्दः द्रव्यकर्मान्यत्वे सति सत्तासम्बन्धित्वात् रूपादिवत् ।" –प्रश० व्यो० पृ० ६४९ ।

स्यान्मतम्, स्पर्शमात्रे वायोरारोपात् 'स लगति' इति प्रतीतिः न तद्ग्रहणात्[1] इति, तर्हि रूपे घटारोपात् 'घटं पश्यामि' इति वित्तिः न तद्दर्शनात् इति सौगतमतम्। रूपोपाधिर्घटः प्रतीयते न स्पर्शोपाधिर्वायुः इति कुतोऽयं विभागः? अथ [2]द्वीन्द्रियग्राह्यं द्रव्यं प्रत्यक्षम्, न च वायुस्तथा[3], चन्द्रार्कादीनां प्रत्यक्षत्वं न स्यात्। पार्श्ववर्तिना[4] तेषाम् इन्द्रियद्वयेन ग्रहणाददोषश्चेत्, वायोरपि विशिष्टपुरुषेण[5] तद्द्वयेन ग्रहणाददोषोऽस्तु। किमत्र प्रमाणम्? 'अन्यत्र किम्' इति समानम्। [6]तस्य रूपादेरभावान्न विशिष्टेनापि तथा[7] ग्रहणमिति चेत्, चन्द्रादौ स्पर्शादिरस्ति इति कुतः? रूपवत्त्वात्, प्रकृते [४६९क] 'स्पर्शवत्त्वात्' इत्यभ्युपगमात्। शेषं चिन्तितमत्र। ५

यदि चायमेकान्तः [8]द्वीन्द्रियग्राह्यमेव[9] प्रत्यक्षम्, आत्मा प्रत्यक्षो न स्यान्मतम (स्यात्, मनस) एव तद्ग्रहणे व्यापारो नान्येन्द्रियस्य। किं च,

एकैकस्य नचेच्छक्तिः इन्द्रियस्येह तद्ग्रहे। १०
तद्द्वयस्यास्तु सा कस्मात् येनैवमभिधीयते॥

तन्न किञ्चिदेतत्।

अथवा, गगनवत् परमाणवोऽपि अत्यन्तपरोक्षा इति तत्परिणामोऽपि शब्दः प्रत्यक्षो न स्यादिति समानमिति चेत्, अत्राह–**परिमण्डलानाम्** इत्यादि। **तादात्म्यपरिणामोपपत्तेः** प्रत्यक्षत्वपरिणामोपपत्तेरसमानं दूषणमिति। वायुना व्यभिचार इति चेत्, अत्राह–**वायोरपि** इत्यादि। १५

उपसंहारमाह–**तदिमे** इत्यादिना। यत एवं **तत्** तस्मात् **इमे** शब्दाः। किंभूताः? इत्याह–**चैतन्येत्यादि**। **चैतन्यग्रहणेन** अपौरुषेयशब्दव्युदासः, विशेषपदेन मिथ्याज्ञानप्रसूत-ध्वनिपरिहारः। किंभूताः पुनरपि? इत्याह–**वर्ण** इत्यादि। ते किं क्रियन्ते? इत्याह–**व्यवहार-पदवीमुपनीयन्ते**। किं कृत्वा? इत्याह–**कथञ्चिद्** इत्यादि। केनचित् उपपत्तिप्रकारेण **प्रतिपद्य** ज्ञात्वा। काम्? इत्याह–[**अर्थ** इत्यादि] **अर्थे** घटादौ **संसर्गः** सम्बन्धो यस्याः शब्दाना **योग्य-तायाः** ताम्। ननु नार्थे शब्दाना योग्यतयापि सम्बन्धः, तथापि पुरुषप्रकारेण ते व्यवहारपदवीमुप-नीयन्ते इति चेत्, अत्राह–**नान्यथा** इति। तदेव दर्शयन्नाह–**कथञ्चित्** इत्यादि। निदर्शन-माह– **शब्दान्तरवत्** इति। अवर्णाद्यात्मकसमुद्रघोपादिवदिति [४६९ख]। २०

ननु योग्यता कार्यदर्शनादनुमीयते, न च शब्दानामर्थप्रतीतिरूप कार्यमस्ति, तेभ्यः अस्पष्ट-साधारणाकारस्यैव प्रतीति(स्तेत)न्निरासार्थं न्वस्ति (?) तेषामिन्द्रियेऽन्यथा प्रतिभासनात्। भिन्नावभासिनोस्व(श्च) ज्ञानयोः नैकविषयता रूपादिज्ञानेष्वपि तत्प्रसङ्गात्। अथ योग्यतातः तत्कार्यव्यवस्था, अन्योऽन्यसंश्रयः–योग्यतायाः [11]तद्व्यवस्था, अतश्च योग्यतासिद्धिरिति चेत्, अत्राह–**वाग्** इत्यादि। २५

(१) वायुग्रहणात्। (२) चक्षुस्पर्शनेति। (३) इति चेत्, (४) तदधिष्ठायकदेवेन। (५) योगिना। (६) वायो। (७) द्वीन्द्रियेण। (८) वायौ रूपादि। (९) चक्षुस्पर्शनेन्द्रियाभ्याम्। (१०) मध्यम्। (११) तत्कार्यव्यवस्था।

